तप्तं चैव महातप्तं महारौरवरौरवौ ।।
सप्ततालश्च नरको नरकः कालसूत्रकः।।१।।
अन्धकारश्च नरको अन्धकारवरस्तथा।।
अष्टावेते तु नरकाः पच्यन्ते यत्र पापिनः।।२।।
प्रथमे प्रथमं विद्याद्द्वितीये द्विगुणं तथा।।
तृतीये त्रिगुणं विद्याच्चतुर्थे तु चतुर्गुणम् ।।३ ।।
पञ्चमे तु गुणाः पञ्च षष्ठे षड्गुणमुच्यते।।
सप्तमे तु गुणाः सप्त अष्टमेऽष्टविधा गुणाः।।४।।
अहोरात्रेण चाध्वानं प्रेता गच्छन्ति तत्पुरम्।।
दुःखितानां ततो दुःखं दुःखाद्दुःखतरं ततः।।५।।
दुःखमेवात्र न सुखं दुःखैर्दुःखं विवर्ध्यते ।।
उपायस्तत्र नैवास्ति येन स्वल्पं सुखं भवेत् ।। ६ ।।
मुच्यते च मृतस्तत्र मारकास्तत्र दुर्लभाः ।।
शब्दे स्पर्शे तथा रूपे रसे गन्धे तु पञ्चमे ।।७।।
न सुखं तत्र तस्यास्ति किञ्चिदेवात्र विद्यते ।।
शारीरैर्मानसैश्चैव दुःखैर्दुःखांतगामिभिः ।। ८।।
आयसैः कण्टकैस्तीक्ष्णैस्तप्तैस्तप्तावृता मही ।।
अन्तरिक्षं खगानीकैरग्निजिह्वैः समावृतम् ।। ९ ।।
अतीव च बुभुक्षात्र पिपासा चाप्यतीव हि ।।
उष्णमत्युष्णमेवात्र शीतलं चातिशीतलम् ।। 200.१० ।।
पातुकामश्च पानीयं राक्षसैर्नीयते सरः ।।
हंससारससंकीर्णं पद्मोत्पलविभूषितम् ।। ११ ।।
पातुकामश्च पानीयं सहसा तत्र धावति ।।
सलिलं प्रेक्षते चैव तत्र तप्ततरं तथा ।। १२ ।।
ततः पक्वानि मांसानि राक्षसैः परिणीयते ।।
क्षारोदकेऽपि च तथा क्षिप्यतेऽत्र महाह्रदे ।। १३ ।।
तत्र चैव ह्रदे नैका मत्स्याः खादन्ति सर्वशः ।।

ततः कालावसाने तु कथञ्चित्प्रपलायिनः ।। १४ ।।
किञ्चिदन्तरमागम्य वेदनार्थाः पतन्ति हि ।।
यातनार्थं पुनस्तत्र मांसं चैवोपजायते ।। १५ ।।
शिरस्येवोपविष्टस्य प्रस्थितस्य प्रधावतः ।।
तस्यार्त्तायामवस्थायां दुःखं भवति दारुणम् ।। १६ ।।
करीषगर्तस्तत्रैव कुम्भीपाकः सुदारुणः ।।
पद्मपत्राकृतिस्तस्य पेशी तत्र शरीरजः ।। १७ ।।
पाटयन्ति सुमार्गेण राक्षसाः करपत्रिकाः ।।
निपीड्य दशनै रोषं भीमनादाः सुरोषिताः ।। १८ ।।
असिपत्रवनं चात्र शृङ्गाटकवनं तथा ।।
तत्र शृङ्गाटकाश्चैव तप्तवालुकमिश्रिताः।।१९।।
दह्यते छिद्यते चैव विध्यते भिद्यते पथा।।
पात्यते पीड्यते चैव कृष्यते च विशस्यते ।।200.२० ।।
श्यामाश्च शबलाश्चैव श्वानस्तेऽत्र दुरासदाः ।।
खादन्ति च सुसंरब्धाः सर्पवृश्चिकसन्निभैः ।। २१ ।।
कण्टकैः प्रतिकूलैश्च तत्रान्या कूट शाल्मलिः ।।
कर्षन्ति तत्र चैवैनं यावदस्थ्यवशेषितः ।।२२।।
यद्दुःखं तस्य दुर्बुद्धेः प्रतिकूलं च तस्य यत् ।।
तत्तदोत्पद्यते शीघ्रं यातनार्थाय यत्नतः ।। २३ ।।
शीतकामस्य वै चोष्णमुष्णकामस्य शीतलम् ।।
सुखकामस्य वै दुःखं सुखं नैवात्र विद्यते ।। २४ ।।
छिन्नाश्च शतधाप्येवं ह्यनिशं तैः सहस्रशः ।।
छिन्नाङ्गाः सर्वगात्रेषु सर्वमेव स विन्दति।।२५।।
सलिलं च नदीं घोरां व्यालाकीर्णां भयानकाम् ।।
उत्तार्यन्ते च तां प्रेतां यां दृष्ट्वैव भयं भवेत् ।। २६ ।।
करम्भवालुका नाम शतयोजनमायता ।।
अग्निज्वालासमा घोरा यथा येन स गच्छति ।। २७ ।।

ततो वैतरणी नाम क्षारोदा तु महानदी ।।
योजनानि तु पञ्चाशदधस्थात्पंचयोजनम् ।। २८ ।।
अगाधपङ्का वै तत्र चर्ममांसास्थिभेदना ।।
तत्र कर्कटका घोरा वज्रदंष्ट्रा विशन्ति ताम् ।। २९ ।।
उलूकाश्च धनुर्मात्रा वज्रजिह्वास्थिभेदनाः ।।
महाविषा महाक्रोधा दुर्विषह्याः सुदारुणाः ।। 200.३० ।।
समुत्तीर्य तु कृच्छ्रेण तस्माद्योजनकर्दमात् ।।
वसन्त्यत्र धरे केचिच्छून्यागारे निराश्रये ।। ३१ ।।
यत्र वै मूषिकगणा भक्षयन्ति ह्यनेकशः ।।
मूषकैर्जग्ध गात्रस्तु ह्यस्थिमात्रावशेषितः ।। ३२ ।।
प्रभाते वायुना स्पृष्टः पुनर्मांसं स विन्दति ।।
शून्यागारप्रवेशात्तु गव्यूतेर्नातिदूरतः ।।३३।।
सहकारवनं नाम रौद्रा यत्र च पक्षिणः ।।
निस्त्वगस्थिस्तैः क्रियते निर्मांसश्चैव मानवः ।।३४।।
निःशिराजालकश्चैव निरक्षिश्रवणस्तथा ।।
वटवृक्षो नातिदूरे दक्षिणे तु त्रियोजनम् ।। ३९ ।।
सन्ध्याभ्र इव चाभाति प्रदीप्तो नित्यमेव तु ।।
दशयोजनविस्तार्णा अधः शतसमायता ।। ३६ ।।
यमचुल्लीति विख्याता गम्भीरा सा त्रियोजनम् ।।
नित्यं प्रज्वलिता सा तु नित्यं धूमान्धकारिता ।। ३७ ।।
तत्र प्रेतसहस्राणि प्रयुतान्यर्बुदानि च ।।
प्रक्षिप्यन्ते    त्वहोरात्रं राक्षसैर्यमकिङ्करैः ।। ३८ ।।
मासमेकं वसत्यन्यो तस्यां चुल्ल्यां परिभ्रमन् ।।
ततः शकुनिका नाम वसामेदोवहा नदी ।। ३९ ।।
चुल्लीकुक्षौ तु विश्रान्ता वेगिनी वहते तु सा ।।
तां समुत्तीर्य कृच्छ्रेण यातनाः सप्तकाः पुनः ।।200.४० ।।
एकैकं दुस्तरं घोरं यथापूर्वं यथाक्रमात् ।।

अनुभुङ्क्ते स कृच्छ्रेण दुष्कृती तीव्रवेदनाः ।। ४१ ।।
दश तत्र लताः शूलाः कुम्भीपाकास्त्रयोदश ।।
याति पापमहोरात्रं तस्मिन्नियमितेन तु ।। ४२ ।।
राक्षसैर्निरनुक्रोशैर्दुर्निरीक्ष्यैस्ततस्ततः ।।
अङ्गारेषु विधूमेषु शूलप्रोतस्तु पच्यते ।। ४३ ।।
शुष्कोदपाने धूमे च अधःशीर्षोऽवलम्बते ।।
ज्वाल्यते तीक्ष्णतैले तु कटाहे स तु पच्यते ।। ४४ ।।
करीषगर्त्ते स पुनः पच्यते मेदवह्निना ।।
एकैकस्मिन्दशाहं च शूलादिषु स पच्यते ।। ४५ ।।
यातनाः सप्तकास्तस्य निष्क्रान्तस्य त्रियोजने ।।
यतो यमनदी नाम तप्तत्रपुजलोर्म्मिणी ।। ४६ ।।
समुत्तीर्य तु कृच्छ्रेण दह्यमानस्त्वचेतनः ।।
ततो मुहूर्त्तं विश्रान्तः किंचिदन्तरमागतः ।। ४७ ।।
दीर्घिकां मोक्षते कान्तां शीतोदां शीतकाननाम् ।।
सर्वकामान्स लभते भगिनी सा यमस्य तु ।। ४८ ।।
भक्ष्यं भोज्यं च सर्वैस्तु पापिभिस्तत्र लभ्यते ।।
स सर्वं विस्मरत्यत्र त्रिरात्रमुषितोऽपि सन् ।। ४९।।
ततः शूलवहो नाम पर्वतः शतयोजनः ।।
निराश्रयः स सत्वानामेकपाषाण एव च ।। 200.५० ।।
तत्र वर्षति पर्जन्यस्तत्र तप्तजलं सदा ।।
तत्र कृच्छ्रेण तरति अहोरात्रेण मानवः ।। ५१ ।।
शृङ्गारकवनं नाम तत्र पश्यन्ति शाद्वलम् ।।
नीलमक्षिकदंशैश्च सुव्याप्तं तद्वनं महत् ।। ५२ ।।
यैस्तु स्पृष्टश्च दष्टश्च कृमिरूपश्च जायते ।।
प्रेतो वर्षति मांसासृगस्मात्कृच्छ्रात्तु निर्गतः ।। ५३ ।।
ततोऽन्यल्लभते चैव यातनार्थं प्रयत्नतः ।।
ततः पश्यति पुत्रांस्तु महद्दुःखं सुदारुणम् ।।५४।।

मातरं पितरं चैव पुत्रान्दारांस्तथा प्रियान्।।
पुरस्ताद्बध्यमानं स क्रन्दमानमचेतनम्।।५५।।
हा त्राहि त्राहि पुत्रेति क्रन्दमानस्ततस्ततः ।।
लगुडैर्मुद्गरैर्दण्डैर्जानुभिर्वेणुभिस्तथा ।। ५६ ।।
मुष्टिभिश्च कशाभिश्च व्यालैरङ्कगतैरपि ।।
तद्दृष्ट्वा तादृशं दुःखं ततो मोहं स गच्छति ।। ५७ ।।
एवमेवात्मकर्माणि पर्यायेण पुनः पुनः ।।
प्राप्नुवन्तीह तेऽत्रैव नरा दुष्कृतकारिणः ।। ५८ ।।
पातकानि च चत्वारि समाचारेण पंचमम् ।।
कृत्वा तानि नरा यान्ति तं देशं पापकारिणः ।।५९।।
तदादिषु च सर्वेषु गुणान्तरपथं गतः ।।
यदा भवति स प्रेतस्तदा स्थावरतां व्रजेत् ।। 200.६० ।।
तदा वा स्थावरे तेषु जातस्य हि भवेन्नरः ।।
क्रमशः स भवेत्प्रेतस्तदा पशुगणेष्वपि ।। ६१ ।।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।।
गतः स वसति प्रेतो नरके तु पुनःपुनः ।। ६२ ।।
ततो निवृत्तकर्मा तु स्वेदजः सम्भवेत्पुनः ।।
स्वेदजानां ततो नित्यं सर्वसंसारचंक्रमात् ।। ६३ ।।
ततश्च पक्षिणां योनिं सर्वां संतरते पुनः ।।
गोयोनौ तु ततो गत्वा पुनर्मानुषतां व्रजेत् ।। ६४ ।।
मानुषे शूद्रतां याति लब्ध्वा यदि तु तुष्यति ।।
ततो वैश्यत्वमागच्छेत्कमर्णाऽनेन वेष्टितः ।। ६५ ।।
वैश्यात्क्षत्रियतां याति तस्माच्च ब्राह्मणो भवेत् ।।
ब्राह्मणत्वमपि प्राप्तः पापकर्मा दुरात्मवान् ।। ६६ ।।
दुःशिक्षितेन मनसा ह्यात्मद्रोग्धा भवेत्तदा ।।
शरीरं मानसं घोरं व्यसनैरुपपादितम् ।। ६७ ।।
उपयुक्तो नरो जातः पूर्वकर्मभिरन्वितः ।।

ज्ञेयश्च ब्रह्महा कुष्ठी काकाक्षः काकतालुकः ।। ६८ ।।
सुरापः श्यावदन्तश्च पूतिगन्धश्च पापकृत् ।।
राजहा पितृहा चैव सुरापश्चापि यो भवेत् ।। ६९ ।।
सुवर्णहर्ता च नरो ब्रह्मघ्नेन समो हि सः ।।
क्वचिच्चात्र विरूपाणां नराणां पापकर्मिणाम् ।। 200.७० ।।
यावद्भिः कर्मभिस्तैस्तैस्तेषु निर्याणवेश्मसु ।।
छिन्नभिन्नविशस्तानां रुधिरेण समन्ततः ।। ७१ ।।
व्याप्तं महीतलं सर्वमापगाश्चापि निर्गताः ।।
अजस्रं क्लिश्यमानानां क्रन्दतां च सुदारुणम् ।। ७२ ।।
समुत्तस्थौ महानादो हाहाकारसमाकुलः ।।
बध्नतो विविधैर्बन्धैर्घातयन्तश्च दारुणम् ।। ७३ ।।
लौहयष्टिप्रहारैश्च आयुधैश्च सुदारुणैः ।।
छेदनैर्भेदनैश्चोग्रैः पीडनाभिश्च सर्वशः ।। ७४ ।।
श्रान्ताः कर्मकरा दूता मोहेनायत्तचेतसः ।।
यदा श्रान्ताश्च खिन्नाश्च हन्तारः पापकर्मिणाम् ।। ७५ ।।
विज्ञापयेत्तदा दूताश्चित्रगुप्तं महौजसम् ।। ७६ ।।
इति श्रीवराहपुराणे संसारचक्रे नरकयातनास्वरूपवर्णनं नाम द्विशततमोऽध्यायः ।।
२०० ।।
201
अथ राक्षसकिंकरयुद्धम् ।।
ऋषिपुत्र उवाच ।।
ततस्ते सहिताः सर्वे चान्योऽन्याभिरताः सदा ।।
नानावेषधरा दूताः कृताञ्जलिपुटास्तदा ।।१ ।।
दूता ऊचुः ।।
वयं श्रान्ताश्च क्षीणाश्च ह्यन्यान् योजितुमर्हसि ।।
वयमन्यत्करिष्यामः स्वामिन्कार्यं सुदुष्करम् ।।२।।
अन्ये हि तावत्तत्कुर्युर्यथेष्टं तव सुव्रत ।।

भगवन्स्म परिक्लिष्टाः त्राहि नः परमेश्वर ।।३।।
ततो विवृत्तरक्ताक्षस्तेन वाक्येन रोषितः।।
विनिःश्वस्य यथा नागो ह्यपश्यत्सर्वतो दिशम् ।।४।।
अदूरे दृष्टवान्कंचित्पुरुषं स ह्यनाकृतिम् ।।
स तु वेगेन सम्प्राप्त इङ्गितज्ञो दुरात्मवान् ।।५।।
निःसृतः स च रोषेण चित्रगुप्तेन धीमता ।।
ततः स त्वरितं गत्वा मन्देहा नाम राक्षसाः ।। ६ ।।
नानारूपधरा घोरा नानाभरणभूषिताः ।।
विनाशाय महासत्वो यत्र तिष्ठन्महायशाः ।। ७ ।।
चित्रगुप्तो महाबाहुः सर्वलोकार्थचिन्तकः ।।
समः सर्वेषु भूतेषु भूतानां च समादिशत् ।। ८ ।।
ततस्ते विविधाकारा राक्षसा पिशिताशनाः ।।
उपरुह्य तथा सर्वे मातंगांश्च हयं तथा ।। ९ ।।
बद्धगोधाङ्गुलित्राणा नानायुधधरास्तथा ।।
अग्रतः किंकराः कृत्वा तिष्ठन्पादाभिवन्दनम् ।। 201.१० ।।
ब्रुवन्तश्च पुनर्हृष्टाः शीघ्रमाज्ञापय प्रभो ।।
तव सन्देशकर्त्तारः कस्य कृन्तामजीवितम् ।। ११ ।।
तेषां तद्वचनं श्रुत्वा चित्रगुप्तो ह्यभाषत ।।
रोषगद्गदया वाचा निःश्वसन्वै मुहुर्मुहुः ।। १२ ।।
भो भो मन्देहका वीराः मम चित्तानुपालकाः ।।
एतान्बध्नीत गृह्णीत भूतराक्षसपुंगवाः ।। १३ ।।
एवं हत्वा च बद्ध्वा च ह्यागच्छत पुनर्यथा ।।
हन्तारः सर्वभूतानां कृतज्ञा दृढ विक्रमा ।। १४ ।।
हत्वा वै पापकानेतान्मम विप्रियकारिणः ।।
एतच्छ्रुत्वा वचस्तस्य वचनं चेदमब्रुवन् ।। १५ ।।
राक्षसा ऊचुः ।।
श्रान्ता वा क्षुधिता वापि दुःखिता वा तपोधनाः ।।

अमात्या एव ज्ञातव्या भृत्याः शतसहस्रशः ।। १६ ।।
एते वधार्थं निर्दिष्टास्त्वयैव च महात्मना ।।
न युक्तं विविधाकारा ह्यस्माकं नाशनाय वै ।। १७ ।।
यथा ह्येते समुत्पन्नाः सर्वधर्मानुचिन्तकाः ।।
तथा वयं समुत्पन्नास्तदर्थं हि भवानपि ।।१८।।
मा च मिथ्या प्रतिज्ञातं धर्मिष्ठस्य भवत्विति ।।
अस्माकं विग्रहे वीर मुच्यन्तां यदि मन्यसे ।। १९ ।।
परित्रायस्व नो वीर किंकराणां महाबलान् ।।
हन्यमानान्हि रक्षोभिरस्मानद्य रणाजिरे ।। 201.२० ।।
एवमुक्त्वा ततो घोरा व्याधयः कामरूपिणः ।।
सन्नद्धास्त्वरितं शूरा भीमरूपा भयानकाः ।। २१ ।।
गजैरन्ये तथा चाश्वै रथैश्चापि महाबलाः ।।
कण्टकैस्तुरगैर्हंसैरन्ये सिंहैस्तथापरे ।।२२।।
मृगैः सृगालैर्महिषैर्व्याघ्रैर्मेषैस्तथापरे ।।
गृध्रैः श्येनैर्मयूरैश्च सर्पगर्द्दभकुक्कुटैः ।। २३ ।।
एवं वाहनसंयुक्ता नानाप्रहरणोद्यताः ।।
समागता महासत्त्वा अन्योन्यमभिकांक्षिणः ।। २४ ।।
तूर्यक्ष्वेडितसंघुष्टैर्बलितास्फोटितैरपि ।।
जयार्थिनो द्रुतं वीराश्चालयन्तश्च मेदिनीम् ।। २५ ।।
ततः समभवद्युद्धं तस्मिंस्तमसि सन्तते ।।
मुकुटैरंगदैश्चित्रैः केयूरैः पट्टिशासिकैः ।। २६ ।।
सकुण्डलैः शिरोभिश्च भ्राजते वसुधातलम् ।।
बहुभिश्च सकेयूरैश्छत्रैश्च मणिभूषणैः ।। २७।।
शूल शक्तिप्रहारैश्च यष्टितोमरपट्टिशैः ।।
असिखड्गप्रहारैश्च बलप्राणसमीरितैः ।। २८ ।।
अभवद्दारुणं युद्धं तुमुलं लोमहर्षणम् ।।
नखैर्दन्तैश्च पादैश्च तेऽन्योऽन्यमभिजघ्निरे ।। २९ ।।

बाहुभिः समनुप्राप्तः केशाकेशि ततः परम् ।।
अयुक्तमतुलं युद्धं तेषां वै समजायत ।। 201.३० ।।
ततस्ते राक्षसा भग्ना दूतैर्घोरपराक्रमैः ।।
देहि देहि वदन्त्येव भिन्धि गृह्णीष्व तिष्ठ च ।। ३१ ।।
वध्यमानाः पिशाचास्ते ये निवृत्ता रणार्दिताः ।।
आहूयन्त प्रतिभयात्क्रोधसंरक्तलोचनाः ।। ३२ ।।
तिष्ठ तिष्ठ क्व यासीति न गच्छामि दृढो भव ।।
मया मुक्तमिदं शस्त्रं तव देहविनाशनम् ।। ३३ ।।
किन्तु मूढ त्वया शस्त्रं न मुक्तं मे रुजाकरम् ।।
मया क्षिप्तास्तु इषवः प्रतीच्छ क्व पलायसे ।।३४।।
किं त्वं वदसि दुर्बुद्धे एषोऽहं पारगो रणे ।।
मम बाहु विमुक्तस्तु यदि जीवस्यतो वद ।। ३५।।
तत्र ते सहसा घोरा राक्षसाः पिशिताशनाः ।।
मन्देहा नाम नाम्ना ते वध्यमानाः सहस्रशः ।। ३६ ।।
ततो भग्ना यदा ते तु राक्षसाः कामरूपिणः ।।
प्रत्यपद्यन्त ते मायां तामसीं तमसावृताः ।।३७ ।।
अदृश्याश्चैव दृश्याश्च तद्बलं तमसावृताः ।।
ततस्ते शरणं जग्मुर्ज्वरं परमभीषणम् ।। ३८ ।।
शूलपाणिं विरूपाक्षं सर्वप्राणिप्रणाशनम् ।।
मन्देहा नाम नाम्ना वै राक्षसाः पिशिताशनाः ।। ३९ ।।
खादन्ति चैव घ्नन्ति स्म चित्रगुप्तेन चोदिताः ।।
व्याधीनां च सहस्राणि दूतानां च महाबलाः ।।201.४०।।
वयमद्य महाभाग त्रायस्व जगतः पते ।।
ततस्तेषां वचः श्रुत्वा दूतानां कामरूपिणाम् ।। ४१ ।।
ज्वरः क्रुद्धो महातेजा योधानां तु सहस्रशः ।।
कालो मुण्डः केकराक्षो लोहयष्टिपरिग्रहः ।।४२।।
विविधान्सन्दिदेशाऽत्र पुरुषानग्निवर्चसः ।।

बद्धाञ्जलिपुटान्सर्वानिदमाह सुरेश्वरः।।४३।।
पच शीघ्रमिमान्पापान्योगेन च बलेन च ।।
ततस्ते त्वरितं गत्वा यत्र ते पिशिताशनाः ।।४४।।
ज्वराज्ञया च ते सर्वे जीमूतघननिःस्वनाः ।।
बहूंस्ते राक्षसान्घोरान्दर्पोत्सिक्तान् सहस्रशः ।। ४५ ।।
बहुशस्त्रप्रहारैश्च शस्त्रैश्च विविधोज्ज्वलैः ।।
तरसा राक्षसा विग्ना रुधिरेण परिप्लुताः ।। ४६ ।।
मोचयामास संग्रामं स्वयमेव यमस्ततः ।।
राक्षसान्मोचयित्वाऽथ हन्यमानान्समन्ततः ।। ४७ ।।
गत्वा ज्वरं महाभागं विनयात्सान्त्वयन्मुहुः ।।
पूजयन्वै ज्वरं दिव्यं गृह्य हस्ते महायशाः ।। ४८ ।।
प्रविवेश गृहं स्वं तु सम्भ्रमेणेदृशेन तु ।।
आननं तु समुत्प्रोश्छ्य संग्रामे स्वेदबिन्दुवत् ।। ४९ ।।
धर्मराजोऽथ विश्रान्तं कालभूतं महाज्वरम् ।।
किंकिं वृत्तमिदं देव व्यापिनस्त्वं महातपाः ।। 201.५० ।।
रोषायासकरं चैव सर्वलोकनमस्कृतः ।।
अहं त्वं चैव देवेश इमं लोकं चराचरम् ।। ५१ ।।
शासेमहि यथाकामं यथादृष्टं यथाश्रुतम् ।।
त्वया ग्राह्यो ह्यहं देव मृत्युना च सुसंवृतः ।। ५२ ।।
लोकान्सर्वानहं हन्मि सर्वघाती न संशयः ।।
गच्छ गच्छ यथास्थानं युद्धं च त्यजतु स्वयम् ।।५३ ।।
राक्षसानां हतास्तत्र षष्टिकोट्यो रणाजिरे।।
अमराश्चाक्षयाश्चैव न हि त्वां प्रापयन्ति वै ।। ५४ ।।
ततो ह्युपरतं युद्धं धर्मराजो यमः स्वयम् ।।
दूतानां चित्रगुप्तेन सख्यमेकमकारयत् ।। ५५ ।।
सम्भाषन्ते ततो दूताश्चित्रगुप्तं तथैव च ।।
नियुञ्जस्व मया पूर्वं सर्वकर्माणि जन्तुषु।।५६।।

स्वकर्मगुणभूतानि ह्यशुभानि शुभानि च।।
रुद्रं दूताः समागम्य चित्रगुप्तस्य पार्श्वतः।।।७७।।
उपस्थानं च कुर्वन्ति कालचिंतकमब्रुवन् ।।
यथा लोका यथा राजा यथा मृत्युः सनातनः।।७८।।
तदैवोत्तिष्ठ तिष्ठेति क्षम्यतां क्षम्यतां प्रभो ।। ७९ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे संसारचक्रे राक्षसकिंकरयुद्धं
नामैकाधिकद्विशततमोऽध्यायः ।। २०१ ।।
202
अथ नारकिदण्डनकर्मविपाकवर्णनम् ।।
ऋषिरुवाच ।।
विस्मयस्तु मया दृष्टस्तस्मिन्नद्भुतदर्शनः ।।
चित्रगुप्तस्य सन्देशो धर्मराजेन धीमतः।।१।।
प्राप्नुवन्ति फलं ते वै ये च क्षिप्ताः पुरा जनाः ।।
अग्निना वै प्रतप्तास्ते बद्धा बन्धैः सुदारुणैः ।। २ ।।
सन्तप्ता बहवो ये ते तैस्तैः कर्मभिरुल्बणैः ।।
श्यामाश्च दशनाभिर्ये त्विमं शीघ्रं प्रमापय ।। ३ ।।
दुराचारं पापरतं निर्घृणं पापचेतसम् ।।
श्वानस्तु हिंसका ये च भक्षयन्तु दुरात्मकम् ।। ४ ।।
पितृघ्नो मातृगोघ्नस्तु सर्वदोषसमन्वितः ।।
आरोप्य शाल्मलीं घोरां कण्टकैस्तैर्विपाटय ।। ५ ।।
एनं पाचय तैलस्य घृतक्षौद्रस्य वा पुनः ।।
तप्तद्रोण्यां ततो मुंच ताम्रतप्तखले पुनः ।। ६ !।
नराधममिमं क्षिप्त्वा प्रदीप्ते हव्यवाहने ।।
ततो मनुष्यतां प्राप्य ऋणैस्तत्र प्रदीप्यते ।। ७ ।।
शयनासनहर्त्तारमग्निदायी च यो नरः ।।
वैतरण्यामयं चैव क्षिप्यतामचिरं पुनः ।। ८ ।।
पापकर्मायमत्यर्थं सर्व तीर्थविनाशकः ।।

तस्य प्रदीप्तः कीलोऽयं वह्नितप्तोऽतिदुःस्पृशः ।।९।।
आदेश्य चोभयोरस्य कर्णयोः कूटसाक्षिकः ।।
यो नरः पिशुनः कूटसाक्षी चालीकजल्पकः।।202.१०।।
ग्रामयाजनकं विप्रमध्रुवं दांभिकं शठम्।।
बद्ध्वा तु बन्धने घोरे दीयतां तु न किंचन।।११।।
जिह्वाऽस्य छिद्यतां शीघ्रं वाचा दुष्टस्य पापिनः ।।
गम्यागम्यं पुरा येन विज्ञातं न दुरात्मना ।। १२ ।।
कृतं लोभाभिभूतेन कामसम्मोहितेन च ।।
तस्य च्छित्वा ततो लिंगं क्षारमग्निं च दीपय ।। १३ ।।
इमं तु खलकं कृत्वा दुरात्मा पापकारिणम् ।।
दायादा बहवो येन स्वार्थहेतोर्विनाशिताः ।। १४ ।।
इमं वार्धुषिकं विप्रं सर्वत्रांगेषु भेदय ।।
तथायं यातनां यातु पापं बहु समाचरन् ।। १५ ।।
सुवर्णस्तेयिनं पापं कृतघ्नं च तथा नरम् ।।
क्रूरं पितृहणं चैनं ब्रह्मघ्नेषु समीकुरु ।। १६ ।।
अस्थि च्छित्वा ततः क्षिप्रं क्षारमग्निं च दापय ।।
इमं तु विप्रं खादन्तु तीक्ष्णदंष्ट्राः सुदारुणाः ।। १७ ।।
पिशुनं हि महाव्याघ्राः पंच घोराः सुदारुणाः ।।
इमं पचत पाकेषु बहुधा मर्मभेदिनम् ।। १८ ।।
येनाग्निरुज्झितः पूर्वं गृहीत्वा च न पूजितः ।।
इमं पापसमाचारं वीरघ्नमतिपापिनम् ।। १९ ।।
कर्कटस्य तु घोरस्य नित्यक्रुद्धस्य मोचय ।।
इमं घोरे ह्रदे क्षिप्तं सर्वयाजनयाजकम् ।। 202.२० ।।
सर्वेषां तु पशूनां यो नित्यं धारयते जलम् ।।
न त्राता न च दाता च पापस्यास्य दुरात्मनः ।। २१ ।।
अदानव्रतिनो विप्रा वेदविक्रयिणस्तथा ।।
सर्वकर्माणि कुर्युर्ये दीयते न च किंचन ।। २२ ।।

तोयभाजनहर्त्तारं भोजनं योऽनिवारयन् ।।
हन्यतां सुदृढैर्दण्डैर्यमदूतैर्महाबलैः ।। २३ ।।
वेणुदण्डकशाभिश्च लोहदण्डैस्तथैव च ।।
जलमस्मै न दातव्यं भोजनं च कथंचन ।। २४।।
तस्मा अन्नं च पानं च न दातव्यं कदाचन ।।
हत विश्वास्य हन्तारं वह्नौ शीघ्रं प्रपाचय ।। २५ ।।
ब्रह्मदेयं हृतं येन तं वै शीघ्रं विपाचय ।।
बहुवर्षसहस्राणि पातये कर्म विस्तरे ।। २६ ।।
समुत्तीर्णं ततः पश्चात्तिर्यग्योनौ प्रपातये ।।
सूक्ष्मदेहविपाकेषु कीटपक्षिविजातिषु ।। २७ ।।
क्लिष्टो जातिसहस्रैस्तु जायते मानुषस्ततः ।।
तत्र जातो दुरात्मा च कुलेषु विविधेषु च ।।२८।।
हिंसारूपेण घोरेण ब्रह्मवध्यां प्रदापयेत् ।।
राज्ञस्तु मारकं घोरं ब्रह्मघ्नं दुष्कृतं तथा।।२९।।
सुवर्णस्तेयिनं चैव सुरापं चैव कारयेत् ।।
अनुभूय ततः काले ततो यक्ष्म प्रयोजयेत् ।।202.३०।।
गोघातको ह्ययं पापः कूटशाल्मलिमारुहेत् ।।
कृष्यते विविधैर्घोरै राक्षसैर्घोरदर्शनैः ।। ३१ ।।
पूतिपाकेषु पच्येत जन्तुभिः संप्रयोजितः ।।
ब्रह्मवध्याच्चतुर्भागैर्मृगत्वं पशुतां गतः ।। ३२ ।।
उद्विग्नवासं पतितं यत्र यत्रोपपद्यते ।।
पापकर्मसमुद्विग्नो जातो जातः पुनःपुनः ।। ३३ ।।
अयं तिष्ठति किं पापः पितृघाती दुरात्मवान् ।।
ते तु वर्षशतं साग्रं भक्षयन्तु विचेतसः ।। ३४ ।।
ततः पाकेषु घोरेषु पच्यतां च नराधमः ।।
ततो मानुषतां प्राप्य गर्भस्थो म्रियतां पुनः ।। ३५ ।।
व्यापन्नो दशगर्भेषु ततः पश्चाद्विमुच्यताम् ।।

तत्रापि लब्ध्वा मानुष्यं क्लेशभागी च जायताम् ।। ३६ ।।
बुभुक्षारुग्विकारैश्च सततं तत्र पीड्यताम् ।।
पापाचारमिमं घोरं मित्रविश्वासघातकम् ।। ३७ ।।
यन्त्रेण पीड्यतां क्षिप्रं ततः पश्चाद्विमुच्यताम् ।।
दीप्यतां ज्वलने घोरे वर्षाणां च शतद्वयम् ।। ३८ ।।
जायतां च ततः पश्चाच्छूनां योनौ दुरात्मवान् ।।
भ्रष्टोऽपि जायतां तस्मान्मानुषः क्लेश भाजनः ।। ३९ ।। प्राप्तवान्विविधान्रोगान्संसारे चैव दारुणान् ।।
ब्रह्मस्वहारी पापोऽयं नरो लवणतस्करः ।। 202.४० ।।
वर्षाणां तु शतं पंच तत्र क्लिष्टो दुरात्मवान् ।।
कृमिको जायते पश्चाद्विष्ठायां कृमिकोऽपरः ।। ४१।।
शकुन्तो जायते घोरस्तत्र पश्चाद्वृको भवेत् ।।
इममग्निप्रदं घोरं काष्ठाग्नौ सम्प्रतापय ।। ४२ ।।
स्वकर्मसु विहीनेषु पश्चाल्लब्धगतिस्तथा ।।
ततश्चाथ मृगो वापि ततो मानुषतां व्रजेत् ।। ४३ ।।
तत्रापि दारुणं दुःखमुपभुंक्ते दुरात्मवान् ।।
सर्वदुष्कृतकार्येषु सह संघातचिन्तकैः ।। ४४ ।।
एवं कर्मसमायुक्तास्ते भवन्तु सहस्रशः ।।
परद्रव्यापहाराश्च रौरवे पतितास्तथा ।। ४५ ।।
कुम्भीपाकेषु निर्दग्धः पश्चाद्गर्दभतां गतः ।।
ततो जातस्त्वसौ पापः शूकरो मलभुक्तथा ।। ४६ ।।
प्राप्नोतु विविधांस्तापान्यथा हृतधनश्च सन् ।।
क्षुधातृष्णापराक्रान्तो गर्दभो दशजन्मसु ।। ४७ ।।
मानुष्यं समनुप्राप्य चौरो भवति पापकृत् ।।
परोपघाती निर्लज्जः सर्वदोषसमन्वितः ।। ४८ ।।
वृक्षशाखावलम्बोऽत्र ह्यधःशीर्षः प्रजायते ।।
अग्निना पच्यतां पश्चाल्लुब्धो वै पुरुषाधमः ।। ४९ ।।

ततो वर्षशते पूर्णे मुच्यते स पुनः पुनः ।।
अजितात्मा तथा पापः पिशुनश्च दुरात्मवान् ।। 202.५० ।।
पूर्वैश्च सूकरो भूत्वा नकुलो जायते पुनः ।।
विमुक्तश्च ततः पश्चान्मानुष्यं लभते चिरात् ।। ५१ ।।
धिक्कृतः सर्वलोकेन कूटसाक्ष्यनृतव्रतः ।।
न शर्म लभते क्वापि कर्मणा स्वेन गर्हितः ।। ५२ ।।
इमं ह्यानृतिकं दुष्टं क्षेत्रहारकमेव च ।।
स्वकर्म दुष्कृतं यावत्तावदुःखं भुनक्त्वसौ ।। ५३ ।।
कर्मण्येकैकशश्चायं स तु तिष्ठत्वयं पुनः ।।
वर्षलक्षं न सन्देहस्ततस्तिष्ठत्वयं पुनः ।। ५४ ।।
ततो जातीः स्मरेत्सर्वास्तिर्यग्योनिं समाश्रितः ।।
जायतां मानुषः पश्चात्क्षुधया परिपीडितः ।। ५५ ।।
सर्वकामविमुक्तस्तु सर्वदोषसमन्वितः ।।
क्वचिज्जात्यां भवेदन्धः क्वचिद्बधिर एव च ।। ५६ ।।
क्वचिन्मूकश्च काणश्च क्वचिद्व्याधिसमन्वितः ।।
एवं हि प्राप्नुयाद्दुःखं न च सौख्यमवाप्नुयात् ।। ५७ ।।
जात्यन्तरसहस्राणि प्रयुतान्यर्बुदानि च ।।
शान्तिं न लभते चैव भूमे क्षेत्रहरो नरः ।। ९८ ।।
तीव्रैरन्तर्गतैर्दुःखैर्भूमिहर्त्ता नराधमः ।।
इमं बन्धैर्दृढैर्बद्ध्वा विपाचय तथाचिरम् ।। ५९ ।।
प्रबद्धः सुचिरं कालं मम लोकं गतो नरः ।।
जायतां स चिरं पापो मार्जारस्तेन कर्मणा ।। 202.६० ।।
तीव्रक्षुधापरिक्लिष्टो बद्धो बन्धनयन्त्रितः ।।
दुःखान्यनुभवंस्तत्र पापकर्मा नराधमः ।। ६१ ।।
सप्तधा सप्त चैकां च जातिं गत्वा स पच्यते ।।
इमं शाकुनिकं पापं श्वभिर्गृध्रैश्च घातय ।। ६२ ।।
ततः कुक्कुटतां यातु विड्भक्षश्च दुरात्मवान् ।।

दंशश्च मशकश्चैव ततः पश्चाद्भवेत्तु सः ।। ६३ ।।
जातिकर्म सहस्रं तु ततो मानुषतां व्रजेत् ।।
इमं सौकरिकं पापं महिषा घातयन्तु तम् ।।६४ ।।
वर्षाणां च सहस्रं तु धावमानं ततस्ततः।।
विभिन्नं च प्रभिन्नं च शृंगाभ्यां पद्भिरेव च ।। ६५ ।।
तस्माद्देशात्ततो मुक्तस्ततः सूकरतां व्रजेत् ।।
महिषः कुक्कुटश्चैव शशो जम्बूक एव च ।। ६६ ।।
यां यां याति पुनर्जातिं तत्र भक्ष्यो भवेत्तु सः ।।
कर्मक्षयोऽन्यथा नास्ति मया पूर्वं विनिर्मितम् ।। ६७ ।।
प्राप्य मानुषतां पश्चात्पुनर्व्याधो भविष्यति ।।
अन्यथा निष्कृतिर्नास्ति जातिजन्मशतैरपि ।। ६८ ।।
उच्छिष्टान्नप्रदातारं पापाचारमधार्मिकम् ।।
अङ्गारैः पचतां चैनं त्रीणि वर्षशतानि च ।। ६९ ।।
भिन्नचारित्रदुःशीला भर्त्तुर्व्यलीककारिणी ।।
आयसान्पुरुषान्सप्त ह्यालिङ्गतु समन्ततः ।। 202.७० ।।
ततः शुनी भवेत्पश्चात्सूकरी च ततः परम् ।।
कर्मक्षये ततः पश्चान्मानुषी दुःखिता भवेत् ।। ७१ ।।
न च सौख्यमवाप्नोति तेन दुःखेन दुखिता ।।
अनेन भृत्या बहवः श्रांताः शांताः प्रवाहिताः ।। ७२ ।।
भक्ष्यं भोज्यं च पानं च न तेषामुपपादितम् ।।
अनुमोदे प्रजा दृष्ट्वा लिप्समानो दुरात्मवान् ।। ७३ ।।
एवं कुरुत भद्रं वो मम पार्श्वे तु दुर्मतिः ।।
रौरवे नरके घोरे सर्वदोषसमन्विते ।। ७४ ।।
सर्वकर्माणि कुर्वाणं क्षपयध्वं दुरासदम् ।।
वर्षाणां तु सहस्राणि तैस्तैः कर्मभिरावृतम् ।। ७५ ।।
प्रक्षिप्यतामयं पश्चाद्दस्युजातौ दुरात्मवान् ।।
जायतामुरगः पश्चात्ततः कर्म समाश्रयेत् ।। ७६ ।।

ततः पश्चाद्भवेत्पापश्चेतरः सर्वपापकृत् ।।
सूकरस्तु भवेत्पश्चान्मेषः संजायते पुनः ।। ७७ ।।
हस्त्यश्वश्च शृगालश्च सूकरो बक एव च ।।
ततो जातस्तु सर्वेषु संसारेषु पुनः पुनः ।। ७८ ।।
वर्षाणामयुतं साग्रं ततो मानुषतां व्रजेत् ।।
पंचगर्भेषु सापत्सु पंच जातो म्रियेत सः ।। ७९ ।।
अपौगण्डो म्रियेत्पंच कर्मशेषक्षये तु सः ।।
ततो मानुषतां याति चैष कर्माविनिर्णयः ।। 202.८०।।
पापस्य सुकृतस्याथ प्रजानां विनिपातने ।।
भूतानां चाप्यसंमानं दुष्प्रहारश्च सर्वशः।।८१।।
अतः स्वयम्भुवा पूर्वं कर्मपाको यथार्थवत् ।।८२।।
इति श्रीवराहपुराणे संसारचक्रे नारकिदण्डकर्मविपाक वर्णनं नाम
द्व्यधिकद्विशततमोऽध्यायः ।। २०२ ।।
203
अथ पापसमूहानुक्रमवर्णनम् ।।
ऋषिपुत्र उवाच ।।
अन्यान्यपि च पापानि चित्रगुप्तो दिदेश ह ।।
व्यामिश्रान्कथ्यमानांश्च शृणुध्वं तान्महौजसः ।। १ ।।
शीलसंयमहीनानां कृष्णपक्षानुगामिनाम् ।।
महापापैरुपेतानां कथ्यतां तत्पराभवम् ।। २ ।।
राजद्विष्टा गुरुद्विष्टाः सर्वे ते वै विगर्हिताः ।।
अविश्वास्या ह्यसम्भाष्याः कुक्षिमात्रपरायणाः ।। ३ ।।
हिंसाविहारिणः क्रूराः सूचकाः कार्यदूषकाः ।।
गवेडकस्य वधकाः महिषाजादिकस्य च ।। ४ ।।
दावाग्निं ये च मुंचन्ति ये च सौकरिकास्तथा ।।
तत्र कालमसंख्येयं पच्यन्ते पापकारिणः ।। ५ ।।
कर्मक्षयाद्यदा भूयो मानुष्यं प्राप्नुवन्ति ते ।।

अल्पायुषो भवन्तीह व्याधिग्रस्ताश्च नित्यशः ।। ६।।
गर्भ एव विपद्यन्ते म्रियन्ते बालकास्तथा ।।
परिरिंगरताः केचिन्म्रियन्ते पुरुषाधमाः ।। ७ ।।
काष्ठवंशे च शस्त्रे च वायुना ज्वलनेन च ।।
तोयेन वा पाशबन्धैः पतनेन विषेण वा ।।८।।
मातापितृवधं कष्टं मित्रसम्बन्धिबन्धुजम् ।।
बहुशः प्राप्नुवन्त्येते विद्रवं चाप्यभीक्ष्णशः।।९।।
प्राणातिपातनं ते वै प्राप्नुवन्ति यथा तथा ।।
लोहकाः कारुकाश्चैव गर्भाणां विनिहिंसकाः ।। 203.१० ।।
मूलकर्मकरा ये च गरदाः पुरदाहकाः ।।
ये च पञ्जरकर्त्तारो ये च शूलोपघातकाः ।। ११ ।।
पिशुनाः कलहाश्चैव ये च मिथ्याविदूषकाः ।।
गोकुञ्जरखरोष्ट्राणां चर्मका मांसभेदकाः ।। १२ ।।
उद्वेजनकराश्चण्डाः पच्यन्ते नरकेषु ते ।।
तत्र कालं तु सम्प्राप्य यातनाश्च सुदुःसहाः ।। १३ ।।
कर्मक्षयो यदा भूयो मानुष्यं प्राप्नुवन्ति ते ।।
हीनाङ्गाः सुदरिद्राश्च भवंति पुरुषाधमाः ।। १४ ।।
श्रवणच्छेदनं चैव नासाच्छेदनमेव च ।।
छेदनं हस्तपादानां प्राप्नुवंति स्वकर्मणा ।। १५ ।।
शारीरं मानसं दुःखं प्राप्नुवन्ति पुनःपुनः ।।
गलवेदनास्तथोग्राश्च तथा मस्तकवेदनाः ।। १६ ।।
कुक्ष्यामयं तथा तीव्रं प्राप्नुवंति नराधमाः ।।
जडान्ध बधिरा मूकाः पंगवः पादसर्पिणः ।। १७ ।।
एकपक्षहताः काणाः कुनखाश्चामयाविनः ।।
कुब्जाः खञ्जास्तथा हीना विकलाश्च घटोदराः ।। १८ ।।
गलत्कुष्ठाः श्वित्रकुष्ठा भवन्ति स्वैश्च कर्मभिः ।।
वाताण्डाश्चाण्डहीनाश्च प्रमेहमधुमेहिनः ।। १९ ।।

योनिशूलाक्षिशूलाश्च श्वास हृद्गुह्यशूलिनः ।।
पिण्डकावर्त्तभेदैश्च प्लीहगुल्मादिरोगिणः ।। 203.२० ।।
बहुभिर्दारुणैर्घोरैर्व्याधिभिः समनुद्रुताः ।।
इत्येतान्हिंसकान्क्रूरान्घातयन्तु सुदारुणान् ।। २१ ।।
मिथ्याप्रलापिनो दूतान्पाचयन्तु यथाक्रमम् ।।
कर्कशाः पुरुषाः सत्या ये च योषानिरर्थकाः ।। २२ ।।
एषां चतुर्विधा भाषा या मिथ्याप्यभिधीयते ।।
हास्यरूपेण या भाषा चित्ररूपेण वा पुनः ।। २३ ।।
अरहस्यं रहस्यं वा पैशुन्येन तु निन्दनात् ।।
उद्वेगजनना वापि कटुका लोकगर्हिताः ।।२४।।
स्नेहक्षयकरां रूक्षां भिन्नवृत्तविभूषिताम् ।।
कदलीगर्भनिस्सारां मर्मस्पृक्कटुकाक्षराम् ।। २५ ।।
स्वरहीनामसंख्येयां भाषंते च निरर्थकम् ।।
अयंत्रितमुखा ये च ये निबद्धाः प्रलापिनः ।। २६ ।।
दूषयन्ति हि जल्पन्तोऽनृजवो निष्ठुराः शठाः ।।
निर्दया गतलज्जाश्च मूर्खा मर्मविभेदिनः ।। २७ ।।
न मर्षयंति येऽन्येषां कीर्त्यमानाञ्छुभान्गुणान् ।।
दुर्वाचः परुषांश्चण्डान्बन्धयध्वं नराधमान् ।। २८ ।।
ततस्तिर्यक्प्रजायन्ते बहुधा कीट पक्षिणः ।।
लोके दोषकराश्चैव लोकद्विष्टास्तथा परे।। ।। २९ ।।
तत्र कालं चिरं घोरं पच्यन्ते पापकारिणः।।
कर्मक्षयो यदा भूयो मानुष्यं प्राप्नुवन्ति ते ।। 203.३० ।।
परिभूता अविज्ञाता नष्टचित्ता अकीर्त्तयः ।।
अनर्च्याश्चाप्यनर्हाश्च स्वपक्षे ह्यवमानिताः ।।३१।।
त्यक्त्वा मित्राणि मित्रेषु ज्ञातिभिश्च निराकृताः ।।
लोकदोषकराश्चैव लोकद्वेष्याश्च ये नराः ।। ३२ ।।
अन्यैरपि कृतं पापं तेषां पतति मस्तके ।।

वज्रं शस्त्रं विषं वापि देहाद्देहनिपातनम् ।। ३३ ।।
मिथ्याप्रलापिनामेषामुक्ता क्लेशपरम्परा ।।
स्तेयहारं प्रहारं च नीतिहारं तथैव च ।। ३४ ।।
स्तेयकर्माणि कुर्वन्ति प्रसह्य हरणानि च ।।
करचण्डाशिनो ये च राजशब्दोपजीविनः ।। ३५ ।।
पीडयन्ति जनान् सर्वान्कृपणान्ग्रामकूटकान् ।।
सुवर्णमणिमुक्तानां कूटकर्मानुकारकाः ।। ३६ ।।
समये कृतहर्त्तारो लोकपीडाकरा नराः ।।
अनादिबुद्धयश्चान्ये स्वार्थातिशयकारिणः ।। ३७ ।।
भूतनिष्ठाभियोगज्ञा व्यवहारेष्वनर्थकाः ।।
भेदकाराश्च धातूनां रजतस्य च कारकाः ।। ३८ ।।
न्यासार्थहारका ये च सम्मोहनकराश्च ये ।।
ये तथोपाधिकाः क्षुद्राः पच्यन्ते तेषु तेष्वथ ।। ३९ ।।
निरयेष्व प्रतिष्ठेषु दारुणेषु ततस्ततः।।
तत्र कालं तु सुचिरं पच्यन्तां पापकारिणः।।203.४०।।
कर्मक्षयो यदा तेषां मानुष्यं प्राप्नुवन्ति ते ।।
तत्र तत्रोपपद्यन्ते यत्र यत्र महद्भयम् ।। ४१ ।।
यस्मिंश्चौरभयं देशे क्षुद्भयं राजतो भयम् ।।
आपद्भ्योऽपि भयं यत्र व्याधिमृत्युभयं तथा ।। ४२।।
ईतयो यत्र देशेषु लुब्धेषु नगरेषु च ।।
क्षयाः कालोपसर्गा वा जायन्ते तत्र ते नराः।।४३।।
बहुदुःखपरिक्लिष्टा गर्भवासेन पीडिताः ।।
एकहस्ता द्विहस्ता वा कूटाश्च विकृतोदराः ।। ४४ ।।
शिराविवृतगात्राश्च हीनाङ्गा वातरोगिणः ।।
अश्रुपातितनेत्राश्च भार्या न प्राप्नुवन्ति ते ।।४९।।
तेषामपत्यं न भवेत्तद्रूपं च सुलक्षणम् ।।
अतिह्रस्वं विवर्णं च विकृतं भ्रान्तलोचनम् ।। ४६ ।।

संसारे च यथा पक्वं कृपणं भैरवस्वनम् ।।
महतः परिवारस्य तुष्टश्चोच्छिष्टभोजकः ।। ४७ ।।
रूपतो गुणतो हीनो बलतः शीलतस्तथा ।।
राजभृत्या भवन्त्येते पृथिवीपरिचारकाः ।। ४८ ।।
अनालया निरामर्षा वेद नाभिः सुसंवृताः ।।
समकार्यसजात्यानां मित्रसम्बन्धिनां तथा ।। ४९ ।।
कर्मान्तकारका ह्येते तृणीभूता भवन्ति ते ।।
अनर्थो राजदण्डो वा नित्यमुत्पाद्यते वधः ।। 203.५० ।।
कर्मकल्याणकृच्छ्रेषु भृशं चापि विमुह्यति ।।
कर्षकाः पशुपालाश्च वाणिज्यस्योपजीवकाः ।।५१।।
यद्यत्कुर्वन्ति ते कर्म सर्वत्र क्षयभागिनः ।।
सत्यमन्विष्यमाणाश्च नैव ते कीर्त्तिभागिनः ।। ५२ ।।
यत्किञ्चिदशुभं कर्म तस्मिन्देशे समुच्छ्रितम् ।।
तस्य देशस्य नैवास्ति वर्जयित्वातुरान्नरान् ।। ५३ ।।
सुवृष्ट्यामपि तेषां वै क्षेत्रं तं तु विवर्जयेत् ।।
अशनिर्वा पतेत्तत्र क्षेत्रं वापि विनश्यति ।।५४ ।।
न सुखं नापि निर्वाणं तेषां मानुषता भवेत् ।।
उत्पद्यते नृशंसानां तीव्रः क्लेशः सुदारुणः ।।५५।।
स्तेयकर्मप्रयुक्तानां मुक्त्वा क्लेशपरम्पराम् ।।
परदारप्रसक्तानामिमां शृणुत यातनाम् ।। ५६ ।।
तिर्यङ्मानुषदेहेषु यान्ति विक्षिप्तमानसाः ।।
विहरन्ति ह्यधर्मेषु धर्मचारित्रदूषकाः ।। ५७ ।।
तांस्तेनैव प्रदानेन संग्रहेतु ग्रहेण वा ।।
मूलकर्मप्रयोगेण राष्ट्रस्यातिक्रमेण वा ।। ५८ ।।
प्रसह्य वा प्रकृत्या वै ये चरन्ति कुलाङ्गनाः ।।
वर्णसङ्करकर्त्तारः कुलधर्मादिदूषकाः ।। ५९ ।।
शीलशौचादिसम्पन्नं ये जनं धर्मलक्षणम् ।।

धर्षयन्ति च ये पापाः श्रूयतां तत्पराभवः ।। 203.६० ।।
निरयं पापभूयिष्ठा अनुभूय महाभयम् ।।
बहुवर्षसहस्राणि कमर्णा तेन दुष्कृताः ।। ६१ ।।
कर्मक्षये यदा भूयो मानुष्यं यान्ति दारुणम् ।।
सङ्कीर्णयोनिजाः क्षुद्रा भवन्ति पुरुषाधमाः ।। ६२ ।।
वेश्यालङ्घककूटानां शौण्डिकानां तथैव च ।।
दुष्टपाषण्डनारीणां नैकमैथुनगामिनाम् ।। ६३ ।।
निर्ल्लज्जपुण्ड्रकाः केचिद्द्वद्धपौरुषगण्डकाः ।।
स्त्रीबन्धकाः स्त्रीविनाशाः स्त्रीवेषाः स्त्रीविहारिणः ।। ६४ ।।
स्त्रीणां चानुप्रवृद्धा ये स्त्रीभोगपरिभोगिनः ।। तद्दैवतास्तन्नियमास्तद्वेषास्तत्प्रभाषिताः ।।६५ ।।
तद्भावास्तत्कथालापास्तद्भोगाः परिभोगिनः ।।
विप्रलोभं च दानेषु प्राप्नुवन्ति नराधमाः ।। ६६ ।।
सौभाग्यपरमासक्ता नरा बीभत्सदर्शनाः ।।
अबुद्धैः सह संवासं प्रियं चाविप्रियं तथा ।। ६७ ।।
शारीरं मानसं दुःखं प्राप्नुवन्ति नराधमाः ।।
कृमिभिर्भक्षणं चैव तप्ततैलोपसेचनम् ।। ६८ ।।
अग्निक्षारनदीभ्यां तु प्राप्नुवन्ति न संशयः ।।
परदारप्रसक्तानां भयं भवति निग्रहः ।। ६९ ।।
सर्वं च निखिलं कार्यं यन्मया समुदाहृतम् ।। 203.७० ।।
इति श्रीवराहपुराणे पापसमूहानुक्रमो नाम त्र्यधिकद्विशततमोऽध्याय ।। २०३ ।।
204
अथ दूतप्रेषणवर्णनम् ।।
ऋषिरुवाच ।।
इदं चैवापरं तस्य वदतो हि मया श्रुतम् ।।
चित्रगुप्तस्य विप्रेन्द्रा वचनं लोकशासिनः ।।१।।
दूरेऽसाविति किं कार्यं न क्षयोऽस्त्यस्य कर्मणः ।।

किं कृपां कुरुते तस्मिन्गृहाण जहि मा व्यथः ।।२।।
व्रीडितः किम्भवाञ्ज्ञातं किं तिष्ठति पराङ्मुखः ।।
किं न गच्छसि वेगेन किं त्वया सुचिरं कृतम् ।। ३ ।।
गच्छ गच्छ पुनस्तत्र शीघ्रं चैनमिहानय ।।
अशक्तोऽस्मीति किं रोषमर्हन्ते दर्पमीदृशम् ।। ४ ।।
किं त्वं वदसि दुर्बुद्धे विवाहस्तस्य वर्त्तते ।।
ऊर्ध्वरेतास्तपस्वीति त्वं मां भाषयसे कथम् ।। ५ ।।
किं त्वं वदसि गर्ह्यं च मुहूर्त्तं परिपालय ।।
रमते कान्तया सार्द्धमिति किं त्वं प्रभाषसे ।। ६ ।।
पतिव्रतेति साध्वीति रहस्यं भाषसे पुनः।।
किं किं वदसि बालो हि निशि चैवागतो गृहम् ।। ७ ।।
आनीयते कथं ज्ञात्वा भोक्तुकामं कथं हरे ।।
जलशायिनं कथं चैव दातुकामं कथं हरे ।।८।।
धार्मिका यूयमेवात्र अहमेको नृशंसवत् ।।
यात यात तथा दृष्ट्वा यथाकालोऽनतिक्रमेत् ।। ९ ।।
शीघ्रं त्वं भव सर्पो हि व्याघ्रस्त्वं च सरीसृपः ।।
जले ग्राहो भव त्वं हि त्वं कृमिस्त्वं सरीसृपः।।204.१०।।
नरकानुगतस्त्वं हि व्याधिभूतः समाश्रयः ।।
अतीसारो भव त्वं हि त्वं छर्दिस्त्वं पुनर्भवः।।।।
कर्णरोगो विषूची च नित्यरोगश्च सम्भवः ।।
ज्वरो भव महाघोरो जले ग्राहो दुरासदः।।१२।।
वातव्याधिस्तथा घोरस्तथैव त्वं जलोदरः।।
अपस्मारस्त्वमुन्मादो वातरोगस्तथैव च ।।१३।।
विभ्रमस्त्वं भवेच्छीघ्रं विष्टम्भश्च पुनर्भव ।।
व्याधिर्भव महाघोरो ह्ययं तृष्णां तु विन्दतु।।१४।।
यथाकालं यथादृष्टं तावत्कालोऽत्र तिष्ठतु ।।
कालसंहरणे वापि शुभस्यागमनेऽपि वा ।। १५ ।।

यूयं च कृतकर्माणस्ततो मोक्षमवाप्स्यथ ।।
द्रुतं द्रवत वेगेन सर्वे गच्छत मा चिरम् ।। १६ ।।
वराज्ञा धर्मराजस्य या मया समुदाहृता ।।
एकाहं क्षपयेस्तत्र द्विरात्रं तत्र मा चिरम् ।। १७ ।।
त्रिरात्रं वै चतूरात्रं षड्रात्रं दशरात्रकम् ।।
पक्षं वा मासमेकं वा बहून्मासांस्तथापि वा ।। १८ ।।
क्षपयित्वा यथाकालं ततो मोक्षमवाप्स्यथ ।।
भूतात्मा मोहवांस्तत्र करुणः कष्टमेव च ।। १९ ।।
यस्मिन्यस्मिंस्तु कालेऽहं यावतश्च श्रयाम्यहम् ।।
तस्मिंस्तस्मिन्महाकालं यूयं तत्कर्तुमर्हथ ।।204.२०।।
विनियोगा मया सूक्ता यथापूर्वं यथाश्रुतम् ।।
जाग्रतं वा प्रमत्तं वा यथा कालो न सम्पतेत् ।। २१ ।।
यत्नात्तथा तु कर्त्तव्यं भवद्भिर्मम शासनात् ।।
अभयं चात्र यच्छामि ब्राह्मणेभ्यो न संशयः ।। २२ ।।
तस्माद्यात ऋषिभ्यश्च स्त्रीभ्यश्चैव महाबलाः ।।
यातनाया न भेतव्यमहमाज्ञापयामि वः ।। २३ ।।
यथावाच्यं च कुरुत यथा कालो न गच्छति ।।
यथाकामं प्रकुरुत यच्च दृष्टं यथा तथा ।। २४ ।।
मयाज्ञप्ता विशेषेण मृत्युना सह सङ्गतः ।।
यथा वीरो महातेजाश्चित्रगुप्तो महायशाः ।।२५ ।।
यथाब्रवीत्स्वयं रुद्रो यथा शक्रः शचीपतिः ।।
यथाज्ञापयते ब्रह्मा चित्रगुप्तस्तथा प्रभुः ।। २६ ।।
इति श्रीवराहपुराणे संसारचक्रे दूतप्रेषणं नाम चतुरधिकद्विशततमोऽध्यायः ।। २०४ ।।

205

अथ शुभाशुभ फलानुकीर्तनवर्णनम् ।।

ऋषिपुत्र उवाच ।।

इदमन्यत्पुरा विप्राः श्रूयतां तस्य भाषितम् ।।

यमस्य चित्रगुप्तस्य यच्च तत्र मया श्रुतम् ।। १ ।।
अयं तु भवतां यातु यातु स्वर्गं महीक्षिताम् ।।
अयं वृक्षस्त्वयं तिर्यगयं मोक्षं व्रजेन्नरः ।। २ ।।
अयं नागो भवेच्छीघ्रमयं तु परमां गतिम् ।।
स्वपूर्वकान्पश्यतेऽयमात्मनस्तु पितामहान् ।। ३ ।।
क्लिश्यतो रुदतश्चैव वदतश्च पुनःपुनः ।।
स्वेन दोषेण सर्वे वा अक्षयं नरकङ्गताः ।। ४ ।।
दारत्यागी त्वधर्मिष्ठः पुत्रपौत्रविवर्जितः ।।
क्षिप्तं वै रौरवे ह्येनं क्षपयन्तु महौजसः ।। ५ ।।
मुच्यतां त इमे सर्वे ह्यतीतानागतास्तथा ।।
मुच्यन्तामाशु मुच्यन्तां त एते पापवर्जिताः ।। ६।।
आगमे च विपत्तौ च सर्वधर्मानुपालकाः ।।
ते तु कल्पान्बहून्स्वर्ग उषित्वा ह्यनसूयकाः ।।७।।
बहुसुन्दरनार्यङ्के ह्याद्ये परमधार्मिकम् ।।
कलौ मानुषतां यातु धर्मस्येह निदर्शनम् ।। ८ ।।
त्रिविष्टपे परिक्लेशो वासो ह्यस्याक्षयो भवेत् ।।
अयमायोधने शत्रुं हत्वा तु निधनङ्गतः ।। ९ ।।
ब्राह्मणार्थे गवार्थे वा राष्ट्रार्थे निधनङ्गतः ।।
शक्रस्य ह्यमरावत्यां निवेदयत मा चिरम् ।।205.१०।।
तत्र वैमानिको भूत्वा कल्पमेकं निवत्स्यति ।।
तथैवायं महाभागो धर्मात्मा धर्मवत्सलः ।। ११ ।।
बहुदानरतो नित्यं सर्वभूतानुकम्पकः ।।
एनं गन्धैश्च माल्यैश्च शीघ्रमेव प्रपूजय ।। १२ ।।
अस्मै पूजा भवेद्देया मयादिष्टा महात्मने ।।
वीज्यतां चामरैरेष रथमस्मै प्रदीयताम् ।।१३।।
प्रेतवासं समुत्सृज्य हीतो यातु त्रिविष्टपम् ।।
इन्द्रस्यार्द्धं भवेच्चैव देवदेवस्य धीमतः ।। १४ ।।

शङ्खतूर्यनिनादेन तत्र वै विजयेन च ।।
तत्र वै पूजयित्वा च प्रायशो लभतां सुखम् ।। १५ ।।
अयं गच्छतु भद्रं चापीन्द्रदेशं दुरासदम् ।।
अनेन वै कीर्तिमता लोकः सर्वो ह्यलंकृतः ।। १६।।
गुणैश्च शतसंख्याकैः शक्र एनं प्रतीक्षते ।।
तावत्स्थास्यति धर्मात्मा यावच्छक्रस्त्रिविष्टपे ।। १७ ।।
तावत्स मोदते स्वर्गे यावद्धर्मोऽनुमीयते ।।
ततच्युतश्च कालेन मानुष्ये सुखमश्नुते ।। १८ ।।
रत्नवेणुप्रदश्चैव सर्वधर्मैरलंकृतः ।।
अश्विनोर्नय लोकं तु सर्वसौख्यसमन्वितम् ।। १९ ।।
अयं यातु महाभागो देवदेवं सनातनम् ।।
अतिसृष्टः पुरा येन यथोक्ताः सुखदोहनाः ।। 205.२० ।।
सर्वशक्त्या समेतेन द्विजेभ्य उपपादिताः ।।
शुचीनां ब्राह्मणानाम्बह्वन्नदानं विशेषतः ।। २१ ।।
तेन कल्पं वसिष्यन्ति रुद्रकल्पा मनोरमाः ।।
तत्र कल्पं वसेद्गत्वा रुद्रलोकं न संशयः ।। २२ ।।
तेन दत्तं द्विजातिभ्यो मधुखण्डपुरःसरम् ।।
रसैश्च विविधैर्युक्तं सर्वगन्धमनोरमम् ।। २३ ।।
तरुणी क्षीरसम्पन्ना गौः सुवर्णयुता शुभा ।।
सवत्सा हेमवासाश्च दत्ताऽनेन महात्मना ।। २४ ।।
अस्य लेख्यं मया दृष्टं तिस्रः कोट्यस्त्रिविष्टपे ।।
स्वर्गात्परिच्युतश्चापि ऋषीणां जायते कुले ।।२५।।
सुवर्णस्य प्रदाता च त्रिदशेभ्यो निवेद्यताम् ।।
त्रिदशानभ्यनुज्ञाप्य यातु देवमुमापतिम् ।। २६ ।।
तत्रैष वै महातेजा यथेष्टं काममाप्नुयात् ।।
तत्रैवायमपि प्रेतगणभक्तो महातपाः ।। २७ ।।
प्रयातु पितृभिः सार्द्धं तर्पिता येन पूर्वजाः ।।

दानव्रता दिवं यान्तु नानालोकनमस्कृताः ।।२८ ।।
अयं भद्रो महाकामं सर्वभूतहिते रतः ।।
सर्वकामैरयं पूज्यः सर्वकामप्रदो नरः ।। २९ ।।
क्षितिप्रदो द्विजातिभ्यो ह्ययं यातु त्रिविष्टपम् ।।
तत्रैव तिष्ठताद्वीरो ब्रह्मलोके सहानुगः ।। 205.३० ।।
विविधैः कामभोगैस्तु सेव्यमानो नरोत्तमः ।।
अक्षयं चाजरं स्थानं पूज्यमानो महर्षिभिः ।।३१ ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे संसारचक्रे शुभाशुभफलानुकीर्त्तनं नाम पञ्चाधिकद्विशततमोऽध्यायः ।। २०५ ।।

206

अथ शुभकर्मफलोदय प्रकरणम् ।।
ऋषिरुवाच ।।
चित्रगुप्तस्य सन्देशो वदतो यो मया श्रुतः ।।
श्रूयतां वै महाभागास्तपःसिद्धा द्विजोत्तमाः ।। १ ।।
इमं सर्वातिथिं दान्तं सर्वभूतानुकम्पकम् ।।
समान्नदानदातारं शेषभोजनभोजिनम् ।। २ ।।
मुञ्च मुञ्च महाभृत्य चैष धर्मस्य निर्णयः ।।
अहं कालेन सार्द्धं हि मृत्युना प्रकृतस्तथा ।। ३ ।।
मम स्थास्यन्ति पार्श्वेषु पापा वै विकृतास्तथा ।।
एनं गास्यन्ति गन्धर्वा गगनेऽप्सरसस्तथा ।।४ ।।
दीयतामासनं दिव्यं तथान्यद्यानमेव च ।
अन्यान्यान्कामयेत्कामान्मनसा यानि चेच्छति ।। ५ ।।
तत्तु शीघ्रं प्रदातव्यं धर्मराजस्य शासनात् ।।
अक्रियाणि तु दानानि पूर्वं दत्तानि धीमता ।। ६ ।।
प्रेक्षतां च महाभागो भोक्तुं चैव सहानुगः ।।
तिष्ठत्येषोऽत्र वै वीरो ममादेशान्महायशाः ।। ७ ।।।
यावत्स्वर्गाद्विमानानि समागच्छन्ति कृत्स्नशः ।।

ततः स प्रवरैर्यानैः सानुगः सपरिच्छदः ।। ८ ।।
देवानां भवनं यातु दैवतैरभिपूजितः ।।
तत्रैव रमतां वीरो यावल्लोको हि धार्यते ।। ९ ।।
स कृतार्थः सदा लोके यत्रैषोऽभिप्रयास्यति ।।
तत्र मेध्यं पवित्रं च यत्र स्थास्यत्ययं शुचिः ।। 206.१० ।।
नैककन्याप्रदातारं नैकयज्ञकृतं तथा ।।
पूज्यतां सर्वकामैस्तु पदं गच्छतु वैष्णवम् ।। ११ ।।
तत्रैष रमतां धीरः सहस्रमयुतं समाः ।।
ततो वै मानुषे लोके आद्ये वै जायतां कुले ।। १२ ।।
भूतानुकम्पको ह्येष क्रियतामस्य चार्च्चनम् ।।
वर्षाणामयुतं चायं तत्र तिष्ठतु देववत् ।। १३ ।।
जायते तु ततः पश्चात्सर्वमानुषपूजितः ।।
उपानहौ च छत्रं च जलभाजनमेव च ।। १४ ।।
असकृद्येन दत्तानि तस्मै पूजां प्रयच्छथ ।।
सभा यत्र प्रवर्त्तन्ते यस्मिन्देशे सहस्रशः ।। १५ ।।
हस्तेन संस्पृशत्येष मृदुना शीतलेन च ।।
विद्याधरस्तथा ह्येष नित्यं मुदितमानसः ।। १६ ।।
महापद्मानि चत्वारि तस्मिंस्तिष्ठन्तु नित्यशः ।।
ततश्च्युतश्च कालेन मानुषं लोकमास्थितः ।। १७ ।।
बहुसुन्दरनारीके कुले जन्म समाप्नुयात् ।।
दधि क्षीरं घृतं चैव येन दत्तं द्विजातिषु ।।१८।।
एष वा यातु नः पार्श्वमस्मै पूजां प्रयच्छथ ।।
नीयतां नीयतां शीघ्रं यत्रयत्र न चालयेत् ।। १९ ।।
गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ।।
यत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ।। 206.२० ।।
ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ।।
तत्रैव रमतां धीरो बहुवर्षशतान्ययम् ।। २१ ।।

बहुसुन्दरनारीभिः सेव्यमानो महातपाः ।।
अमराख्यो भवेत्तत्र गोलोकेषु समाहितः ।। २२ ।।
इदमेवापरं चैव चित्रगुप्तस्य भाषितम् ।।
सर्वदेवमया देव्यः सर्ववेदमयास्तथा ।। २३ ।।
अमृतं धारयन्त्यश्च प्रचरन्ति महीतले ।।
तीर्थानां परमं तीर्थमतस्तीर्थं न विद्यते ।। २४ ।।
पवित्रं च पवित्राणां पुष्टीनां पुष्टिरेव च ।।
तस्मात्पुरस्तु दातव्यं गवां वै मेध्यकारणात् ।। २५ ।।
दध्ना हि त्रिदशाः सर्वे क्षीरेण च महेश्वरः ।।
घृतेन पावको नित्यं पायसेन पितामहः ।। २६ ।।
सकृद्दत्तेन प्रीयन्ते वर्षाणां हि त्रयोदश ।।
तां दत्त्वा चैव पीत्वा च प्रीतो मेध्यस्तु जायते ।। २७ ।।
पंचगव्येन पीतेन वाजिमेधफलं लभेत् ।।
गव्यं तु परमं मेध्यं गव्यादन्यन्न विद्यते ।। २८ ।।
दन्तेषु मरुतो देवा जिह्वायां तु सरस्वती ।।
खुरमध्ये तु गन्धर्वाः खुराग्रेषु तु पन्नगाः ।। २९ ।।
सर्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।।
ककुदे सर्वक्षत्राणि लांगूले धर्म आश्रितः ।। 206.३० ।।
अपाने सर्वतीर्थानि प्रस्रावे जाह्नवी नदी ।।
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ।। ३१ ।।
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।।
रोमे वसन्ति विद्याश्च त्वक्केशेष्वयनद्वयम् ।। ३२ ।।
धैर्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।।
स्मृतिर्मेधा तथा लज्जा वपुः कीर्तिस्तथैव च ।। ३३ ।।
विद्या शान्तिर्मतिश्चैव सन्ततिः परमा तथा ।।
गच्छन्तमनुगच्छन्ति ह्येता गावो न संशयः ।। ३४।।
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।।

यत्र गावस्तत्र लक्ष्मीः सांख्यधर्मश्च शाश्वतः ।। ३५ ।।
सर्वरूपेषु ता गावस्तिष्ठन्त्यभिमतास्तथा ।।
भवनेषु विशालेषु सर्वप्रासादपङ्क्तिषु ।। ३६ ।।
स्त्रियश्च पुरुषाश्चैव रक्षन्तश्च सुयन्त्रिताः ।।
शयनासनपानेषु ह्युपविष्टाः सहस्रशः ।। ३७ ।।
क्रीडन्ति विविधैर्भोगैर्भोगेषु च सहस्रशः ।।
तत्र पानगृहेष्वन्ये पुष्पमालाविभूषिताः ।। ३८ ।।
भक्ष्याणां विविधानां च भोजनानां च संचयात् ।।
शयनासनपानानि वाजिनो वारणांस्तथा ।। ३९ ।।
अपश्यन्विविधास्तत्र स्त्रियश्च शुभलोचना ।।
शोभयन्ति स्त्रियः काश्चिज्जलक्रीडा गतास्तथा ।। 206.४० ।।
उद्यानेषु तथा चान्या भवनेषु च पुण्यतः ।।
अनेन सदृशं नास्ति ह्यस्मादन्यन्न विद्यते ।। ४१ ।।
अहो सूत्रकृतं शिल्पमहोरत्नैरलंकृतम् ।।
एवं गृहाद्गृहं गच्छन्नहं तत्र ततस्तमः ।। ४२ ।।
ततस्तु निखिलं सम्यग्दृष्ट्वा कर्म महोदयम् ।।
पुनरेवागतः पार्श्वं यमस्य द्विजसत्तमाः ।। ४३ ।।
इति श्रीवराहपुराणे संसारचक्रे शुभकर्मफलोदयो नाम षडधिकद्विशततमोऽध्यायः ।।
२०६ ।।
207
अथ संसारचक्रपुरुष विलोभनप्रकरणम् ।।
ऋषिपुत्र उवाच ।।
इदमन्यन्महाभागान्नारदात्कलहप्रियात् ।।
श्रुतं विप्रा यथा तत्र यमस्य सदसि स्वयम् ।। १ ।।
तथा च पृच्छतस्तस्य पुरावृत्तं महात्मनः ।।
आख्यानं कथयामास यदुक्तं चित्रभानुना ।। २ ।।
यथा च जनको राजा कामान्दिव्यानवाप्तवान् ।।

तत्सर्वं कथयिष्यामि श्रूयतां मुनिसत्तमाः ।।३।।
अयं तत्र महातेजा नारदो मुनिसत्तमः ।।
धर्मराजसभां प्राप्तस्तपसा द्योतितप्रभः ।।४ ।।
तत्र राजाऽथ वेगेन तं दृष्ट्वा स्वयमागतम् ।।
अर्चयित्वा यथान्यायं कृत्वा चैव प्रदक्षिणम् ।। ५ ।।
उवाच च महातेजाः सूर्यपुत्रः प्रतापवान् ।।
स्वागतं ते द्विजश्रेष्ठ दिष्ट्या प्राप्तोऽसि नारद ।। ६ ।।
सर्वज्ञः सर्वदर्शी च सर्वधर्मविदां वरः ।।
गान्धर्वस्येतिहासस्य विज्ञाता त्वं महामुने ।। ७।।
वयं पूताश्च मेध्याश्च त्वां दृष्ट्वा ह्यागतं विभो ।।
अयं देशः पुनः पूतः सर्वतो मुनिसत्तम ।। ८ ।।
यत्कार्यं येन वा कार्यं यद्वै मनसि वर्त्तते ।।
प्रब्रूहि भगवन्नाशु यच्चान्यत्किंचिदुत्तमम् ।। ९ ।।
दुर्ल्लभं त्रिषु लोकेषु यच्च प्रियतरं तव ।।
तपोमयानां सर्वेषां द्विजातीनां च सुव्रत ।। 207.१० ।।
इति धर्मवचः श्रुत्वा नारदः प्राह धर्मवित् ।।
अहं ते कथयिष्यामि यत्पृष्टं संशयास्पदम् ।। ११ ।।
नारद उवाच।।
भवान् पाता च गोप्ता च नेता धर्मस्य नित्यशः ।।
सत्येन तपसा क्षान्त्या धैर्येण च न संशयः ।। १२ ।।
भावज्ञश्च कृतज्ञश्च त्वदन्यो न हि विद्यते ।।
संशयं सुमहत्प्राप्तस्तन्ममाचक्ष्व सुव्रत ।। १३ ।।
अमरत्वं कथं याति व्रतेन नियमेन च ।।
केन वा दानधर्मेण तपसा वा सुरोत्तम ।। १४ ।।
अतुलां च श्रियं लोके कीर्त्तिं च सुमहत्फलम् ।।
लभन्ते शाश्वतं स्थानं दुर्ल्लभं विगतज्वराः ।। १५ ।।
केन गच्छन्ति नरकं पापिष्ठं लोकगर्हणम् ।।

सर्वमाख्याहि तत्त्वेन परं कौतूहलं हि मे ।। १६ ।।
यम उवाच ।।
गच्छन्ति हि नरा घोरा बहवोऽधर्मनिर्मितम् ।।
बन्धांश्च सुबहूंस्तत्र प्राप्नुवन्ति तपोधन ।। १७ ।।
विस्तरेण तु तत्सर्वं ब्रवीमि मुनिसत्तम ।।
श्रूयतां तन्महाभाग श्रुत्वा चैवोपधारय ।। १८ ।।
नाग्निचिन्नरकं याति न पुत्री न च भूमिदः ।।
शूरश्च शतवर्षी च वेदानां चैव पारगः ।। १९ ।।
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये नराः ।।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च ये नराः ।। 207.२० ।।
अहिंसका न गच्छन्ति ब्रह्मचर्यव्यवस्थिताः ।।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ।। २१ ।।
स्वदारनिरता दान्ताः परदारविवर्जकाः ।।
सर्वभूतात्मभूताश्च सर्वभूतानुकम्पकाः ।। २२ ।।
न गच्छन्ति तु तं देशं पापिष्ठं तमसावृतम् ।।
यातनास्थानसंपूर्णं हाहाकारभयाकुलम् ।। २३ ।।
ज्ञानवन्तो द्विजा ये च ये च विद्यां पराङ्गताः ।।
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ।। २४ ।।
न गच्छन्त्यत्र दातारः सर्वभूतहिते रताः ।।
शुश्रूषका मातृपित्रोर्न गच्छन्ति च ये नराः ।। २५ ।।
तिलान् गां च हिरण्यं च पृथिवीं चापि शाश्वतीम् ।।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ।। २६ ।।
यथोक्तं यजमानाश्च सत्रयाजिन एव च।।
चातुर्मास्यकरा ये च ये द्विजाः आहिताग्नयः ।।२७।।
गुरुचित्तानुपालाश्च कृतिनो मौनयन्त्रिताः ।।
नित्यस्वाध्यायिनो दान्ताः सदा सभ्याश्च ये नराः ।।२८।।
मां न पश्यन्ति ते चैव स्वात्मभावेन भाविताः।।

अपर्वमैथुना ये च न गच्छन्ति जितेन्द्रियाः ।।२९।।
ब्राह्मणा अमरत्वं च प्राप्नुवन्ति न संशयः ।।
निवृत्ताः सर्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।। 207.३० ।।
न गच्छन्ति हि तद्घोरं यत्र ते पापकर्मिणः ।। ३१ ।।
नारद उवाच ।।
किं दानं श्रेय आहोस्वित्पात्रेण फलमुच्यते ।।
किं वा कर्म महत्कृत्वा स्वर्गलोके महीयते ।। ३२ ।।
रूपं वा धनधान्यं वा ह्यायुश्च कुलमेव वा ।।
प्राप्यते येन दानेन तन्ममाचक्ष्व सुव्रत ।। ३३ ।।
यम उवाच ।।
न शक्यं विस्तरेणेह वक्तुं वर्षशतैरपि ।।
शुभाशुभानां गतयो द्रष्टुं वा प्रष्टुमेव वा ।। ३४ ।।
किंचिन्मात्रं प्रवक्ष्यामि येन यत्प्राप्यते नरैः ।।
विविधानि च सौख्यानि प्रायशस्तु गुणागुणैः ।। ३५ ।।
रहस्यमिदमाख्यानं श्रूयतां मुनिसत्तम ।।
या गतिः प्राप्यते येन प्रेत्यभावे न संशयः ।। ३६ ।।
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।।
आयुःप्रकर्षो भोगाश्च भवति तपसैव तु ।। ३७ ।।
ज्ञानविज्ञानमारोग्यं रूपसौभाग्यसम्पदः।।
तपसा प्राप्यते भोगो मनसा नोपदिश्यते ।।३८।।
एवं प्राप्नोति पुण्येन मौनेनाज्ञां महामुने ।।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ।। ३९ ।।
अहिंसया परं रूपं दीक्षया कुलजन्म च ।।
फल मूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ।।207.४० ।।
पयोभक्ष्या दिवं यान्ति जायते द्रविणाढ्यता ।।
गुरुशुश्रूषया नित्यं श्राद्धदानेन सन्ततिः।।४१ ।।
गवाद्याः कालदीक्षाभिर्ये तु वा तृणशायिनः ।।

स्वयं त्रिषवणाद्ब्रह्म त्वपः पीत्वेष्टलोकभाक् ।। ४२ ।।
क्रतुयष्टा दिवं याति चोपहारं च सुव्रत ।।
कृत्वा तु दशवर्षाणि नीरपानाद्विशिष्यते ।। ४३ ।।
रसानां प्रतिसंहारात् सौभाग्यमनुजायते ।।
आमिषस्य प्रतीहाराद्भवत्यायुष्मती प्रजा ।।४४।।
गन्धमाल्यनिवृत्त्या तु मूर्त्तिर्भवति पुष्कला।।
अन्नदानेन च नरः स्मृतिं मेधां च विन्दति।।४५।।
छत्रप्रदानेन गृहं वरिष्ठं रथं ह्युपानद्युग सम्प्रदानात् ।।
वस्त्रप्रदानेन सुरूपता च धनैश्च पुत्रैश्च भृता भवन्ति ।। ४६ ।।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती ।।
अन्नपानप्रदानेन कामभोगैस्तु तृप्यते ।।४७।।
पुष्पोपगन्धं च फलोपगंधं यः पादपं स्पर्शयते द्विजाय ।।
स स्त्रीसमृद्धं हि सुरत्नपूर्णं गृहं हि सर्वोपचितं लभेत ।।४८ ।।
वस्त्रान्नपानीयरसप्रदानात् प्राप्नोति तानेव रसप्रदानात् ।।
स्रग्धूपगन्धान्यनुलेपनानि पुष्पाणि गृह्याणि मनोरमाणि ।। ४९ ।।
दत्त्वा द्विजेभ्यः स भवेत्सुरूपो रोगांश्च कांश्चिल्लभते न जातु ।।
बीजैरशून्यैः शयनाभिरामं दद्याद्गृहं यः पुरुषो द्विजाय ।। 207.५० ।।
स स्त्रीसमृद्धं गजवाजिपूर्णं लभेदधिष्ठानवरं वरिष्ठम् ।।
धूपप्रदानेन तथा गवां च लोकानाप्नोति नरो वसूनाम् ।। ५१ ।।
गजं तथा गोवृषभप्रदानैः स्वर्गे सुखं शाश्वतमामनन्ति ।।
घृतेन तेजः सुकुमारतां च प्राणद्युतीः स्निग्धता चापि तैलैः ।। ५२ ।।
क्षौद्रेण नानारसतृप्ततां च दीपप्रदानाद्द्युतिमाप्नुवन्ति ।। ५३ ।।
पायसेन वपुःपुष्टिं कृसरात्स्निग्धसौम्यताम् ।।
फलैस्तु लभते पुत्रं पुष्पैः सौभाग्यमेव च ।। ५४ ।।
रथैर्दिव्यं विमानं तु शिबिकां चैव मानवः ।।
प्रेक्षणैरपि सौभाग्यं प्राप्नोतीह न संशयः ।। ५५ ।।
अभयस्य प्रदानेन सर्वकामानवाप्नुयात् ।। ५६ ।।

इति श्रीवराहपुराणे संसारचक्रे पुरुषविलोभनं नाम सप्ताधिकद्विशततमोऽध्यायः ।। २०७ ।।

208

अथ पतिव्रतोपाख्यानवर्णनम् ।।

ऋषिपुत्र उवाच ।।

मुहूर्त्तस्य तु कालस्य दिव्याभरणभूषितान् ।।
प्रयातान्दिवि संप्रेक्ष्य विमानैः सूर्यसन्निभैः ।। १ ।।
ब्राह्मणास्तपसा सिद्धाः सपत्नीकाः सबान्धवाः ।।
सानुरागा ह्युभयतो मन्युनाभिपरिप्लुताः ।। २ ।।
विवर्णवदनो राजा प्रभातेजोविवर्जितः ।।
अचिरादेव सञ्जातः क्रोधेन भृशदुःखितः ।। ३ ।।
तं तथा निष्प्रभं दृष्ट्वा धर्मराजं तपोधनः ।।
नारदश्चाब्रवीत्तत्र ज्ञात्वा तस्य मनोगतम् ।। ४ ।।
अपि त्वं भ्राजमानस्तु पशोः पतिरिवापरः ।।
कस्मात्ते शोभनं वक्त्रं क्षणाद्वैवर्ण्यमापतत् ।। ५ ।।
विनिःश्वसन्यथा नागः कस्मात्त्वं परितप्यसे ।।
राजन्कस्माद्विभेषि त्वमेतदिच्छामि वेदितुम् ।। ६ ।।

यम उवाच ।।

विवर्णं जायते वक्त्रं शुष्यते न च संशयः ।।
यन्मया हीदृशं दृष्टं श्रूयतां तन्महामुने ।। ७ ।।
यायावरास्तु ये विप्रा उञ्छवृत्तिपरायणाः ।।
दृढस्वाध्यायतपसो ह्रीमन्तो ह्यनसूयकाः ।। ८ ।।
अतिथिप्रियकाश्चैव नित्ययुक्ता जितेन्द्रियाः ।।
ते त्वहंमानिनः सर्वे गच्छन्त्युपरि मे द्विज ।। ९ ।।
न च मामुपतिष्ठन्ति न चैव वशगा मम ।।
मस्तकं मम गच्छन्ति सपत्नीकाः सहानुगाः ।। 208.१० ।।
दिव्यगन्धैर्विलिप्ताङ्गा माल्यभूषितवाससः ।।

सृजन्तो मम माल्यानि तेन ताम्ये द्विजोत्तम ।। ११ ।।
मृत्यो तिष्ठसि कस्यार्थे को वा मृत्युः कथं भवेत् ।।
कि त्वं न भाषसे मृत्यो ब्रूहि लोके निरर्थकः ।। १२ ।।
लोभासक्तान्सदा हंसि पापिष्ठान्धर्मवर्जितान् ।।
एषां तपसि सिद्धानां नाहं विग्रहवानिह ।। १३ ।।
निग्रहानुग्रहौ नापि मया शक्यौ महात्मनाम् ।।
कर्त्तुं वा प्रतिषेद्धुं वा तेन तप्ये भृशं मुने .।। १४ ।।
एतस्मिन्नन्तरे तत्र विमानेन महाद्युतिः ।।
पतिव्रता समं भर्त्रा सानुगा सपरिच्छदा।।१५।।
महता तूर्यघोषेण सम्प्राप्ता प्रियदर्शना ।।
धर्मराजहितं सर्वं धर्मज्ञा धर्मवत्सला ।।१६।।
साब्रवीत्तु विमानस्था साधयन्ती शुभाङ्गना ।।
विचित्रं प्रसृतं वाक्यं सर्वसत्त्वसुखावहम् ।। १७।।
पतिव्रतोवाच।।
धर्मराज महाबाहो कृतज्ञः सर्वसम्मतः ।।
मैवमीर्षां कुरुष्व त्वं ब्राह्मणेषु तपस्विसु।।
एतेषां तपसां वीर माहात्म्यं बलमेव च ।।
अचिन्त्याः सर्वभूतानां ब्राह्मणा वेदपारगाः ।।१९ ।।
ब्राह्मणाः सततं पूज्या ब्राह्मणाः सर्वदेवताः ।।
मात्सर्यं क्रोधसंयुक्तं न कर्त्तव्यं द्विजातिषु ।।208.२०।।
त्वया शुभाशुभं कर्म नित्यं पूजा मनस्विनाम् ।।
रागो वा रोषमोहौ वा न कर्तव्यौ सदा सताम् ।। २१ ।।
प्रयाता गगने दृष्टा विद्युत्सौदामिनी यथा ।।
दृष्ट्वा पतिव्रतां नारीं धर्मराजेन पूजिताम् ।। २२ ।।
अब्रवीन्नारदस्तत्र धर्मराजं तथागतम् ।। २३ ।।
नारद उवाच ।।
का चैषा सुमहाभागा सुरूपा प्रमदोत्तमा ।।

या त्वया पूजिता राजन् हितमुक्त्वा गता पुनः ।।२४।।
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।।
एतन्मे सुमहाभाग कथयस्व समासतः ।।२५।।
यम उवाच ।।
अहं ते कथयिष्यामि कथां परमशोभनाम् ।।
एषा मया यथा तात पूजितापि च कृत्स्नशः ।। २६ ।।
पुरा कृतयुगे तात निमिर्नाम महायशाः ।।
आसीद्राजा महातेजाः सत्यसन्ध इति श्रुतः ।। २७ ।।
तस्य पुत्रो मिथिर्नाम जननाज्जनकोऽभवत् ।।
तस्य रूपवती नाम पत्नी प्रियहिते रता ।। २८ ।।
सा चाप शुभकर्माणि पतिभक्ता पतिव्रता ।।
प्रीत्या परमया युक्ता भर्त्तुर्वचनकारिणी ।। २९ ।।
सोऽपि राजा महाभागः सर्वभूतहिते रतः ।।
धर्मात्मा च महात्मा च सत्यसन्धो महातपाः ।। 208.३० ।।
य इमां पृथिवीं सर्वां धर्मेण परिपालयन् ।।
न व्याधिर्न जरा मृत्युस्तस्मिन्राजनि शासति ।। ३१ ।।
ववर्ष सततं देवस्तस्य राष्ट्रे महाद्युतेः ।।
एवं बहुगुणोपेतं तस्य राज्यं महात्मनः ।। ३२ ।।
न कश्चिद् दृश्यते मर्त्यो रुजार्त्तो दुःखितोऽपि वा ।।
अथात्र बहुकालस्य राजानं मिथिलाधिपम्।।३३।।
उवाच राज्ञी विप्रेन्द्र विनयात्प्रश्रितं वचः।।३४।।
राज्ञ्युवाच ।।
भृत्यानां च द्विजातीनां तथा परिजनस्य च ।।
यदस्ति द्रविणं किंचित्पृथिव्यां यद्गृहे च ते ।। ३५।।
विनियुक्तं तु तत्सर्वं सान्निध्यं तु तथा त्वया ।।
न च राजन्विजानासि भोजनस्य प्रशंससि ।। ३६ ।।
नास्ति तन्नियमः कश्चित्पुष्पमूल्यं च नास्ति नः ।।

न वा गवादिकं किंचिन्न च वस्त्राणि कर्हिचित् ।। ३७ ।।
न चैव वार्षिकः कश्चिद्विद्यते भाजनस्य च ।।
दृश्यते हि महाराज मम चैवाथ सुव्रत ।। ३८ ।।
यत्कर्तव्यं मया वापि तन्मे ब्रूहि नराधिप ।।
कर्त्र्यस्म्यहं विशेषेण यद्वाक्यमपि मन्यसे ।। ३९ ।।
राजोवाच ।।
न शक्यमुपरोधेन वक्तुं भामिनि विप्रियम् ।।
न च पश्याम्यहं देवि तव चैव जनस्य च ।। 208.४० ।।
तदब्रवीमि यथाशक्त्या यदि मे मन्यसे प्रिये ।।
हविष्ये वर्त्तमानानामिदं वर्षशतं गतम् ।। ४१ ।।
कुद्दालेन हि काष्ठेन क्षेत्रं वै कुर्महे प्रिये ।।
ततो धर्मविधिं तत्त्वात्प्राप्नुयां मे न संशयः ।।४२।।।
भक्ष्यं भोज्यं च ये ये च ततस्त्वं सुखमाप्स्यसि ।।
एवमुक्ता ततो राज्ञी राजानमिदमब्रवीत् ।। ४३ ।।
देव्युवाच ।।
भृत्यानां तु सहस्राणि तव राजन्निवेशने ।।
अश्वानां च गजानां च सैरिभानां तथैव च ।। ४४ ।।
उष्ट्राणां महिषाणां च खराणां च महायशाः ।।
एते सर्वे कथं राजन्न कुर्वन्ति तवेप्सितम् ।। ४५ ।।
राजोवाच ।।
नियुक्तानि हि कर्माणि वार्षिकाणीतराणि च ।।
सर्वकर्माणि कुर्वन्ति ये भृत्या मे वरानने ।। ४६ ।।
बलीवर्दाः खरा अश्वा गजा उष्ट्रा ह्यनेकशः ।।
सर्वे नियुक्ता मे देवि सर्वकर्मसु शोभने ।। ४७ ।।
आयसं त्रापुषं ताम्रं राजतं कांचनं तथा ।।
नियुक्तानि तु सर्वाणि सर्व कर्मस्वनिन्दिते ।। ४८ ।।
ननु पश्याम्यहं देवि किंचिद्धैमं न चायसम् ।।

येन कुर्यामहं देवि कुद्दालं सुसमाहितः ।।४९।।
एवमुक्ता महादेवी  तेन राज्ञा सुशोभना ।।
हृष्टपुष्टमना देवी राजानमिदमब्रवीत् ।। 208.५० ।।
गच्छ राजन्यथाकाममनुयास्यामि पृष्ठतः ।।
एवमुक्तः सुनिष्क्रान्तः सभार्यः स नरेश्वरः ।। ५१ ।।
ततो राजा च देवी च क्षेत्रं मृगयतस्तदा ।।
गतौ च परमाध्वानं ततो राजाब्रवीदिदम् ।। ५२ ।।
इदं भद्रं मम क्षेत्रमास्स्वात्र वरवर्णिनि ।।
यावद्गुल्मानिमान् भद्रे कण्टकांश्च वरानने ।। ५३ ।।
अहं छिनद्मि वै देवि त्वमेताञ्छोधय प्रिये ।।
एष ते कर्म योगस्तु ततः प्राप्स्यामि चेप्सितम् ।। ५४ ।।
एवमुक्ता महादेवी तेन राज्ञा तपोधन ।।
उवाच मधुरं वाक्यं प्रहसन्ती नृपाङ्गना ।। ५५ ।।
वृक्षोऽत्र दृश्यते पार्श्वे सौवर्णो गुल्म एव च ।।
पानीयस्य तु सान्निध्यं न किंचिदिह दृश्यते ।। ५६ ।।
कथं क्षेत्रं करिष्यावो हृद्रोगस्य तु कारकम् ।।
इयं नदी ह्ययं वृक्ष इयं भूमिः समांसला ।। ५७ ।।
अस्मिन्वापि कृतं कर्म कथं गुणकरं भवेत् ।।
तस्यास्तद्वचनं श्रुत्वा राजा वचनमब्रवीत् ।। ५८ ।।
शुभं सानुनयं वाक्यं भूतानां गुणवत्सलः ।।
पूर्वगृहे भवेत्पूर्वं विनियुक्तं तथा प्रिये ।। ५९ ।।
पानीयस्य तु पार्श्वेन सन्निकृष्टेन सुन्दरि ।।
चतुर्थं जनपर्यन्तं न किंचिदिह दृश्यते ।। 208.६० ।।
अयं गृहो महादेवि न च बाधाऽत्र कस्यचित् ।।
ततस्तच्छोधयामास तत्क्षेत्रं भार्यया सह ।। ६१ ।।
वियन्मध्ये तथोग्रश्च सविता तपते सदा ।।
समृद्धश्च तदा तत्र निदाघः काल आगतः ।। ६२ ।।

प्रवृद्धो दारुणो घर्मः कालश्चैवातिदारुणः ।।
ततः सा तृषिता देवी क्षुधिता च तपस्विनी ।। ६३ ।।
स्निग्धौ ताम्रतलौ पादौ तस्यां सन्तापमागतौ ।।
गुणप्रवाहरक्तौ तु तस्याः पादौ च सुव्रत ।। ६४ ।।
सूर्यस्य पादा मध्याह्ने तापयन्त्यग्निसन्निभाः ।।
ततः सा व्यथिता देवी भर्त्तारमिदमब्रवीत् ।। ६५ ।।
तृषितास्मि महाराज भृशमुष्णेन पीडिता ।।
पानीयं दीयतां राजन्मम शीघ्रं प्रसादतः ।। ६६ ।।
इत्युक्त्वा पतिता देवी विह्वला दुःखपीडिता ।।
पतन्त्या च तया सूर्यो दृष्टो विह्वलया तथा ।। ६७ ।।
यदृच्छया पतन्त्या तु सूर्यः कोपेन वीक्षितः ।।
ततो विवस्वान् भगवान् सन्त्रस्तो गगने तदा ।। ६८।।
दिवं मुक्त्वा महातेजाः पतितो धरणीतले ।।
ततो दृष्ट्वा तु राजाऽसौ स्वभावेन च वर्जितम् ।। ६९ ।।
किमर्थमिह तेजस्विंस्त्यक्त्वा मण्डलमागतः ।।
किं करोमि महातेजाः सर्वलोकनमस्कृतः ।। 208.७० ।।
एवं ब्रुवन्तं राजानं सूर्यः सानुनयोऽब्रवीत् ।।
पतिव्रता शुभाक्षी च ममैषा रुषिता भृशम् ।। ७१ ।।
ततोऽहं पतितो राजंस्तव कार्यानुशासनः ।।
अनया सदृशी नारी त्रैलोक्ये नैव विद्यते ।। ७२ ।।
पृथिव्यां स्वर्गलोके वा न काचिदिह दृश्यते ।।
अहोऽस्याः परमं सत्त्वमहोऽस्याः परमं तपः ।। ७३।।
अहो धैर्यं च शक्तिश्च तवैवं शंसिता गुणाः।।
तथेयं ते महाभाग तव चित्तानुसारिणी।।७४।।
अनुरूपा विशुद्धा च तपसा च वराङ्गना।।
पतिव्रता च साध्वी च नित्यं तव हिते रता।।७९।।
सदृशी ते महाभाग शक्रस्येव यथा शची ।।

पात्रं पात्रवता प्राप्तं सुकृतस्य महत्फलम् ।।७६।।
अनुरूपः सुरूपो वा यतो जातः सुयन्त्रितः ।।
मा च ते वितथः कामो भवेच्चैव नराधिपः ।।७७ ।।
कुरुष्व दयितं क्षेत्रं यथा मनसि वर्त्तते ।।
भोजनार्थं महाराज त्वदन्यो न हि विद्यते।।७८।।
फलदं च यशस्यं च भविष्यति हि कामदम्।।
एवमुक्त्वा ततः सूर्यः ससर्ज जलभाजनम्।।७९।।
उपानहौ च छत्रं च दिव्यालंकार भूषितम् ।।
ददौ च राज्ञे सविता प्रीत्या परमया युतः ।।208.८० ।।
उपभोक्तुं सुखस्यार्थं सुपुण्यस्य विशेषतः ।।
दत्त्वा तत्पुण्यकर्माणं ततः प्राह दिवाकरः ।। ८१ ।।
एवमुक्त्वा तु भगवांस्तथा तत्कृतवान् क्वचित् ।।
राज्ञा च जनकेनैव प्रियाया हितकाम्यया ।। ८२ ।।
ततः साप्यायिता देवी तोयेन शुभलक्षणा ।।
लब्धसंज्ञा गतभया राजानमिदमब्रवीत् ।। ८३ ।।
देवी दृष्ट्वा तदाश्चर्यं विस्मयोत्फुल्ललोचना ।।
केन दत्तं शुभं तोयं दिव्यं छत्रमुपानहौ ।। ८४ ।।
एतन्मे संशयं राजन्कथयस्व तपोधन ।।
राजोवाच ।।
एष देवो महादेवि विवस्वान्नाम नामतः ।। ८५ ।।
तवानुकम्पया देवि मुक्त्वाकाशमिहागतः ।।
एवमुक्ता तु सा देवी भर्त्तारमिदमब्रवीत् ।। ८६ ।।
करवाण्यस्य कां प्रीतिं ज्ञायतामस्य वाञ्छितम् ।।
ततो राजा महातेजाः प्रणिपत्य कृताञ्जलिः ।। ८७ ।।
विज्ञापयामास तदा भगवन् किं करोमि ते ।।
एवमुक्तो नरेन्द्रेण सूर्यो वचनमब्रवीत् ।। ८८ ।।
अभयं मे महाराज स्त्रीभ्यो भवतु मानद ।।

इति श्रीवराहपुराणे भगवच्छास्त्रे भगवद्गोकर्णेश्वरमाहात्म्ये जलेश्वरमाहात्म्यवर्णनं नाम पंचदशाधिकद्विशततमोऽध्यायः ।।२१५।।

216

अथ गोकर्णशृंगेश्वरादिमाहात्म्यम् ।।

ब्रह्मोवाच ।।

तस्मात्स्थानादपक्रान्ते त्र्यम्बके मृगरूपिणि ।।
अन्योऽन्यं मन्त्रयित्वा तु मया सह सुरोत्तमाः ।। १ ।।
त्रिधाविभक्तं तच्छृङ्गं पृथक्पृथगवस्थितम् ।।
सम्यक्स्थापयितुं देवा विधिदृष्टेन कर्मणा ।। २ ।।
स्थापितं देवि नीत्वा वै शृंगाग्रं वज्रपाणिना ।।
मया तत्रैव तन्मध्यं स्थापितं विधिवत्प्रभोः ।। ३ ।।
देवैर्देवर्षिभिश्चैव सिद्धैर्ब्रह्मर्षिभिस्तथा ।।
गोकर्ण इति विख्यातिः कृता वैशेषिकी वरा ।। ४ ।।
विष्णुना देवतीर्थेन तन्मूलं स्थापितं ततः ।।
तस्य शृङ्गेश्वर इति नाम तत्राभवन्महत् ।। ५ ।।
तत्र तत्रैव भगवांस्तस्मिन्शृंगे त्रिधा स्थिते ।।
सान्निध्यं कल्पयामास भागेनैकेन चोन्मना ।। ६ ।।
शतं तेन तु भागानामात्मनो निहितं मृगे ।।
तस्माद्द्विकं तु भागानां शृंगाणां त्रितये न्यधात् ।।७।।
मार्गेण तच्छरीरेण निर्ययौ भगवान्विभुः ।।
शैशिरस्य गिरेः पादं प्रपेदे स्वयमात्मनः।।८।।
शतसंख्या स्मृता व्युष्टिस्तस्मिञ्छैलेश्वरे विभोः ।।
त्रिधा विभक्ते शृंगेऽस्मिन्नेकाग्रगतिनिप्रभोः ।। ९ ।।
ततः सुरासुरगुरुर्देवं भूतमहेश्वरम् ।।
तपसोऽग्रेण संसेव्य वव्रिरे विविधान्वरान् ।। 216.१० ।।
देवदानवगन्धर्वाः सिद्धयक्षमहोरगाः ।।
श्लेष्मातकवनं कृत्स्नं सर्वतः परिमण्डलम् ।। ११ ।।

तीर्थयात्रां पुरस्कृत्य प्रादक्षिण्यं च चक्रतुः ।।
फलान्निर्द्दिश्य तीर्थानां तथा क्षेत्रफलं महत् ।। १२ ।।
यथास्थानानि ते तस्मान्निवृत्ताश्च सुरादयः ।।
एवं तस्मान्निवृत्तेषु दैवतेषु तदा ततः ।। १३ ।।
पौलस्त्यो रावणो नाम भ्रातृभिः सह राक्षसैः ।।
आगम्योग्रेण तपसा देवमाराधयद्विभुम् ।। १४ ।।
शुश्रूषया च परया गोकर्णेश्वरमव्ययम् ।।
यदा तु तस्य तुष्टो वै वरदः शंकरः स्वयम् ।। १५ ।।
तदा त्रैलोक्यविजयं वरं वव्रे स राक्षसः ।।
प्रसादात्तस्य तत्सर्वं वाञ्छितं मनसा हि यत् ।। १६ ।।
अवाप्य च दशग्रीवस्तदिष्टं परमेश्वरात् ।।
त्रैलोक्यविजयायाशु तत्क्षणादेव निर्ययौ ।। १७ ।।
त्रैलोक्यं स विनिर्जित्य शक्रं च त्रिदशाधिपम् ।।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ।। १८ ।।
शृंगाग्रं यत्पुरा नीत्वा स्थापितं वज्रपाणिना ।।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ।। १९ ।।
तद्यावद्रावणः स्थाप्य मुहूर्त्तमुदधेस्तटे ।।
सन्ध्यामुपासते तत्र लग्नस्तावदसौ भुवि ।। 216.२० ।।
न शशाक यदा रक्षस्तदुत्पाटयितुं बलात् ।।
वज्रकल्पं समुत्सृज्य तदा लंकां विनिर्ययौ ।। २१ ।।
स तु दक्षिणगोकर्णो विज्ञेयस्ते महामते ।।
स्वयं प्रतिष्ठितस्तत्र स्वयं भूतपतिः शिवः ।। २२ ।।
एतत्ते कथितं सर्वं मया विस्तरतो मुने ।।
यथावदुत्तरस्तस्य गोकर्णस्य महात्मनः।।२३।।
दक्षिणस्य च विप्रर्षे तथा शृंगेश्वरस्य च।।
शैलेश्वरस्य च विभो स्थित्युत्पत्तिर्यथाक्रमम्।।२४।।
व्युष्टिः क्षेत्रस्य महती तीर्थानां च समुद्भवः ।।

प्रोक्तं सर्वं मया वत्स किमन्यच्छ्रोतुमिच्छसि ।। २५ ।।
इति श्रीवराहपुराणे गोकर्णशृंगेश्वरादीनां माहात्म्यं नाम षोडशाधिकद्विशततमोऽध्यायः ।। २१६ ।।

217

अथ धरणीवराहसंवादफलश्रुतिवर्णनम् ।।
सनत्कुमार उवाच ।।
उक्तं भगवता सर्वं यथावत्परमेष्ठिना ।।
पृष्टेन संशयं सम्यक्परं कृत्वार्थनिश्चयम् ।। १ ।।
भगवद्विश्वरूपस्य स्थाणोरप्रतिमौजसः ।।
क्रीडतो लोकनाथस्य कानने मृगरूपिणः ।। २ ।।
यथा शरीरं शृङ्गं च पुण्यक्षेत्रे प्रतिष्ठितम् ।।
हिताय जगतस्तत्र तीर्थानि च यथाभवन् ।। ३ ।।
तन्मे ब्रूहि महाभाग यथातत्त्वं जगत्पते ।।
ब्रह्मोवाच ।।
पुलस्त्यो वक्ष्यते शेषं यदतोऽन्यन्महामुने ।। ४ ।।
सर्वेषामेव तीर्थानामेषां फलविनिश्चयम् ।।
कुरु राज्यं पुरस्कृत्य मुनीनां पुरतो वने ।। ५ ।।
पुत्रो मे मत्समः सम्यग्वेदवेदांगतत्त्ववित् ।।
यच्छ्रुत्वा पुरुषस्तात विमुक्तः सर्वकिल्बिषैः ।। ६ ।।
यशस्वी कीर्त्तिमान्भूत्वा वन्द्यते प्रेत्य चेह च ।।
श्रोतव्यमेतत्सततं चातुर्वर्ण्यैः सुसंयुतैः ।। ७।।
मंगल्यं च शिवं चैव धर्मकामार्थसाधकम् ।।
श्रीभूतिजननं पुण्यमायुष्यं विजयावहम् ।। ८ ।।
धन्यं यशस्यं पापघ्नं स्वस्तिकृच्छान्तिकारकम् ।।
श्रुत्वैवं पुरुषः सम्यङ्न दुर्गतिमवाप्नुयात् ।। ९ ।।
कीर्तयित्वा व्रजेत्स्वर्गं कल्यमुत्थाय मानवः ।।
सूत उवाच ।।

इत्युक्त्वा भगवान्देवः परमेष्ठी प्रजापतिः ।। 217.१० ।।
सनत्कुमारं सन्दिश्य विरराम महायशाः ।।
एतद्वः कथितं सर्वं मया तत्त्वेन सत्तमाः ।। ११ ।।
वराहभूमिसंवादं सारमुद्धृत्य सत्तमाः ।।
यश्चैव कीर्त्तयेन्नित्यं शृणुयाद्वापि भक्तितः ।। १२ ।।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ।।
प्रभासे नैमिषारण्ये गंगाद्वारेऽथ पुष्करे ।।१३ ।।
प्रयागे ब्रह्मतीर्थे च तीर्थे चामरकण्टके ।।
यत्पुण्यफलमाप्नोति तत्कोटिगुणितं भवेत् ।। १४ ।।
कपिलां द्विजमुख्याय सम्यग्दत्त्वा तु यत्फलम् ।।
प्राप्नोति सकलं श्रुत्वा चाध्यायं तु न संशयः ।। १५ ।।
श्रुत्वाऽस्यैव दशाध्यायं शुचिर्भूत्वा समाहितः ।।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ।।१६ ।।
यः पुनः सततं शृण्वन्नैरन्तर्येण बुद्धिमान् ।।
पारयेत्परया भक्त्या तस्यापि शृणु यत्फलम् ।। १७ ।।
सर्वयज्ञेषु यत्पुण्यं सर्वदानेषु यत्फलम् ।।
सर्वतीर्थाभिषेकेन यत्फलं मुनिभिः स्मृतम् ।। १८ ।।
तत्प्राप्नोति न सन्देहो वराहवचनं यथा ।।
यदेतत्पारयेद्भक्त्या मम माहात्म्यमुत्तमम् ।। १९ ।।
अपुत्रस्य भवेत्पुत्रः सपौत्रस्य सुपौत्रकः ।।
यस्येदं लिखितं गेहे तिष्ठेत्संपूज्यते सदा ।। 217.२० ।।
तस्य नारायणो देवः सन्तुष्टः स्याद्धि  सर्वदा ।।
यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्येण मानवः ।। २१ ।।
श्रुत्वा तु पूजयेच्छास्त्रं यथा विष्णुं सनातनम् ।।
गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणानां च तर्पणैः ।। २२ ।।
यथाशक्ति नृपो ग्रामैः पूजयेच्च वसुन्धरे।।
श्रुत्वा तु पूजयेद्यः पौराणिकं नियतः शुचिः ।।२३ ।।

सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् २४।।ॐ।।
इति श्रीवराहपुराणे भगवच्छास्त्रे धरणीवराहसंवादे फलश्रुतिर्नाम
सप्तदशाधिकद्विशततमोऽध्यायः।।२१७।।
समाप्तमिदं वराहमहापुराणम् ।।
218
अथ पुराणपठनादिविषयानुक्रमणिकाध्यायः ।।
त्रिःसप्तषट्क्षितिमिते नृपविक्रमस्य काले गते भगवतो हरिबोधनस्य ।।
वीरेश्वरेण सह माधवभद्रनाम्ना काश्यां वराहकथितं लिखितं पुराणम् ।। १ ।।
वराहस्य पुराणस्य वृत्तान्तान्प्रब्रवीम्यहम् ।।
आदौ सम्बन्धकथनं वृत्तान्तश्चादिकल्पकः।। २ ।।
आदिसृष्टिस्ततः प्रोक्ता चरितं दुर्जनस्य च ।।
वृत्तान्तोद्देशभागश्च श्राद्धकल्पस्ततः परम् ।। ३ ।।
आदिवृत्तान्तकथने सरमाख्यानमेव च ।।
महातपोपाख्यानं च अग्न्युत्पत्तिस्ततः परम् ।। ४ ।।
अश्विनोरपि चोत्पत्ति गौर्युत्पत्तिस्तथैव च ।।
विनायकस्य चोत्पत्तिर्नागोत्पत्तिस्तथैव च ।। ५ ।।
स्कन्दोत्पत्तिश्च भानोश्च उत्पत्तिः समुदाहृता ।।
कामादीनां तथोत्पत्तिः देव्युत्पत्तिस्तथैव च ।। ६ ।।
धनदस्य तथोत्पत्तिः परापरविनिर्णयः ।।
धर्मोत्पत्तिस्तथोत्पत्ती रुद्रस्य च ततः स्मृता ।। ७ ।।
सोमोत्पत्तिरहस्यं च क्षितेश्चापि समासतः ।।
उक्तः प्रागितिहासश्च व्याधोपाख्यानमेव च ।। ८ ।।
ततः सत्यतपोपाख्या मत्स्यद्वादशिका तथा ।।
कूर्मद्वादशिका चापि वराहद्वादशी तथा ।। ९ ।।
नृसिंहद्वादशी चापि वामनद्वादशी तथा ।।
भार्गवद्वादशी चापि श्रीरामद्वादशी तथा ।। 218.१० ।।
कृष्णद्वादशिका चापि बुद्धद्वादशिका तथा ।।

कल्कि द्वादशिका चापि पद्मनाभस्य द्वादशी ।। ११ ।।
ततो व्रतं धरण्याश्च गीतागस्त्यस्य चोत्तमा ।।
पशुपालस्य चाख्यानं भर्तृप्राप्तिव्रतं तथा ।। १२ ।।
शुभव्रतं धन्यव्रतं कान्तिव्रतमतः स्मृतम् ।।
सौभाग्यव्रतमाख्यातमविघ्नव्रतमेव च ।। १३ ।।
शान्तिव्रतं कामव्रतमारोग्यव्रतमेव च ।।
पुत्रप्राप्तिव्रतं शौर्यव्रतं वै सार्वभौमिकम् ।।१४।।
पुराणस्तवनं चैव नारायणेश्वरेण च ।।
रुद्रगीता ततः पुंसां प्रकृतेश्चापि निर्णयः ।।१५।।
ततो भुवनकोशस्य वर्णनं समुदाहृतम् ।।
जम्बूद्वीपस्य मर्यादावर्णनं परिकार्तितम् ।।१६।।
भारतादिसमुद्देशः सृष्टिसम्भाग एव च ।।
नारदस्य च संवादो महिषेण प्रकीर्त्तितः ।। १७ ।।
शक्तिमाहात्म्यकथनं महिषासुरघातनम् ।।
रुद्रमाहात्म्यकथनं पर्वाध्यायस्ततः परम् ।। १८ ।।
श्वेतोपाख्यानमत्रोक्तं तिलधेनुविधिस्ततः ।।
जलधेनोरसधेनोर्गुडधेनोर्विधिः परम् ।। १९ ।।
ततश्च शर्क्कराधेनोर्मधुधेनोस्ततः परम् ।।
दधिधेनोश्च लवणधेनोः कार्पासधेनुका ।। 218.२० ।।
धान्यधेनुश्च भगवच्छास्त्रलक्षणमेव च ।।
विष्णोस्तोत्रं ततो नाना प्रश्नाः प्रोक्ता हरिं प्रति ।। २१ ।।
ततो भागवतानां च लक्षणं परिकीर्त्तितम् ।।
लक्षणं सुखदुःखानां द्वात्रिंशदपराधकाः ।। २२ ।।
नानामन्त्रास्ततः प्रोक्ता देवोपकरणे विधिः ।।
भोज्याभोज्यस्य कथनं संध्योपस्थानकारणम् ।। २३ ।।
वियोनिगर्भमोक्षश्च कोकामुखप्रशंसनम् ।।
भगवच्छास्त्रकथने माहात्म्यं पुष्पगन्धयोः ।। २४ ।।

रूपकारणमत्रोक्तं मायाचक्रं ततः परम् ।।
कुब्जाम्रकस्य माहात्म्यं वर्णदीक्षा ततः परम् ।। २५ ।।
कंकृताञ्जनदर्पाणां मन्त्राः प्रोक्तास्ततः परम् ।।
राजान्नभक्षणे प्रायश्चित्तं प्रोक्तं ततः परम् ।। २६ ।।
दन्तकाष्ठाद्यकरणे प्रायश्चित्तं ततः परम् ।।
शवादिस्पर्शने मन्त्र त्यागे चोक्तं ततः परम् ।। २७ ।।
नीलवस्त्रपरिधाने क्रोधयुक्तस्य चार्चने ।।
रक्तवस्त्रपरिधाने अन्धकारे प्रपूजने ।। २८ ।।
कृष्णवस्त्रपरिधाने धौतवस्त्रस्य धारणे ।।
क्रोडादिमांसभक्षे च प्रायश्चित्तं प्रकीर्त्तितम्।।२९।।
दीपोच्छिष्टस्य तैलस्य करलेपेन पूजने।।
श्मशानगमने स्पृष्टपूजने चैव शोधने ।। 218.३० ।।
पिण्याकभक्षणे चैव उपानद्गूढपादके ।।
भगवच्छास्त्रविहिताकरणे शोधने ततः।।३१।।
सूकरक्षेत्रमहिमा ततो जम्बूकगृध्रयोः ।।
खञ्जरीटस्य चाख्यानं पुनः कोकामुखस्य च।।३२।।
बदरीषण्डमाहात्म्यं गुह्यधर्मप्रकीर्तनम् ।।
मन्दारगुह्यमहिमा शालग्रामप्रसंशनम् ।।३३।।
सोमेश्वरस्य महिमा मुक्तिक्षेत्रस्य चापि हि।।
त्रिवेण्याश्चैव माहात्म्यं माहात्म्यं गण्डकीभवम् ।३४।।
चक्रतीर्थस्य महिमा हरिक्षेत्रसमुद्भवः ।।
देवह्रदस्य चाख्यानं रुरुक्षेत्रस्य चापि हि ।। ३५ ।।
गोनिष्क्रमस्य महिमा द्वारवत्यास्ततः परम् ।।
तत्रत्य तीर्थमहिमा लौहार्गलमतः परम् ।। ३६ ।।
मथुरातीर्थमाहात्म्यं प्रादुर्भावस्तथैव च ।।
यमुनातीर्थमाहात्म्यमक्रूरस्य च तीर्थकम् ।। ३७ ।।
देवारण्यस्य माहात्म्यं चक्रतीर्थस्य चोत्तमम् ।।

कपिलस्यापि महिमा तथा गोवर्धनस्य च ।। ३८ ।।
तथा आख्यायिकायुक्तं विश्रान्तेश्च ततः परम् ।।
गोकर्णस्य च माहात्म्यं सरस्वत्यास्तथैव च ।। ३९ ।।
यमुनोद्भेदमहिमा कालिञ्जरसमुद्भवाः।।
गंगोद्भेदस्य महिमा शापः स्यम्बस्य वै तथा ।। 218.४०।।
मधुकप्रतिमायाश्च स्थापनं संप्रकीर्तितम् ।।
शैलार्च्चा स्थापनं चापि मृन्मयार्च्चास्थितिस्तथा ।। ४१ ।।
ताम्रार्चास्थापनं चापि कांस्यार्चास्थापनं  तथा ।।
रौप्यर्चास्थापनं चाथ सौवर्णप्रतिमास्थितिः ।।४२।।
श्राद्धोत्पत्ति स्ततः प्रोक्तं पिण्डं संकल्प एव च ।।
पिण्डोत्पत्तिस्ततः प्रोक्ता पितृयज्ञविनिर्णयः ।। ४३ ।।
मधुपर्क्कफलं दाने संसारचक्रवर्णनम् ।।
दुष्कृत्यकरणं चैव सुखवर्णनमेव च ।। ४४ ।।
कृतान्तदूतकथनं यातनारूपमेव च ।।
वर्णनं नरकाणां च किंकराणां च वर्णनम् ।। ४५ ।।
तथा कर्मविपाकं च यादृशं कर्म तादृशम् ।।
पापकृत्यस्य कथनं दूतप्रेषणकर्म च ।। ४६ ।।
शुभाशुभस्य कथनं शुभकर्मफलोदयम् ।।
लोभनं पुरुषस्यापि निमेराख्यानमद्भुतम् ।। ४७ ।।
पापनाशकथां दिव्यां गोकर्णेशसमुद्भवम्।।
नन्दिना वरदानं च जलशैलेशयोस्तथा ।। ४८ ।।
शृंगेश्वरस्य महिमा चैवं वृत्तान्तसंग्रहः ।।
एतच्छ्रुत्वाप्नुयान्मर्त्यो वाराहश्रुतिजं फलम् ।। ४९ ।।
इत्यनुक्रमणिका नाम अष्टादशाधिकद्विशततमोऽध्यायः ।। २१८ ।।
समाप्तं वाराहं महापुराणं शुभम् ।।
यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।।
यदि शुद्धमशुद्धं वा मम दोषो न विद्यते ।। १ ।।

कृपया ध्यान दें -

वराह पुराण के लगभग 218 अध्यायों में से उपरोक्त 95 अध्याय निम्नलिखित वैबसाईट से उपलब्ध हुए हैं -

http://sa.wikisource.org/wiki/%E0%A4%AE%E0%A5%81%E0%A4%96%E0%A5%8D%E0%A4%AF%E0%A4%AA%E0%A5%83%E0%A4%B7%E0%A5%8D%E0%A4%A0%E0%A4%AE%E0%A5%8D

विषयानुक्रमः

१ मङ्गलाचरणम्, अनुक्रमणिकाध्यायः, वराहं प्रति धरणीकृताः प्रश्नाः, हसतः क्रोडरूपिणो हरेरुदरे रुद्रसिद्धमहर्ष्यादिदर्शनम्
२ सृष्टिस्थितियुगादिमाहात्म्यम्, पुराणलक्षणम्, तत्रादौ सर्गः संक्षेपेण, अथ सृष्टिं विस्तरेण वदेति महीप्रश्नः, सात्विकसृष्टिः, तमोमोहमहामोह तामिस्रान्धतामिस्राख्यपञ्चपर्वाऽविद्योत्पत्तिः, पश्वादितिर्यक्स्रोतः सर्गः, देवाद्यूर्ध्वस्रोतः सर्गः, मनुष्याद्यर्वाक्स्रोतःसर्गः, पुनः षट्सर्गनामानि, अथ स्थितिः, तत्रादौ रुद्रसनकादिमरीच्याद्युत्पत्तिः, दक्षकन्याभ्यो देवदानवगन्धर्वोरगपक्षिणामुत्पत्तिः, रुद्रसर्गः, एकादशरुद्रसमुद्भवः, युगमाहात्म्यम्, स्वायंभुवात्मजप्रियव्रतसदसि नारदागमनम्, नारदावलोकिताश्चर्यनिरूपणम्, तत्र कन्यारूपसावित्रीदर्शनम्, नारदाय सावित्रीकृतं वेदादीनां दानम्
३ प्रियव्रतनारदसंवादः, नारदप्राग्जन्मवृत्तान्तः, ब्रह्मपारस्तवकथनम्, नारायणदर्शनम्, नारदवरप्राप्तिः
४ नारायणव्यापकत्वम्, नारायणस्याष्टमूर्तयः, प्रियव्रतमोक्षः, अश्व शिरश्चरितम्, अश्वमेधावभृथे ब्राह्मणैः परिवारितस्य तस्य कपिलजैगीषव्यसमागमः, नारायणदर्शनाभिलाषिणो राज्ञः संदेहवारणाय कपिलजैगीषव्याभ्यां

विष्णुगरुडरूपधारणम्, पुनर्योगमायया शेषाङ्कशायिनारायणरूपदर्शनम्, नारायणस्य सर्वव्यापित्वकथनम्.

५ कर्मजन्यमोक्षादिकथनम्, मोक्षप्राप्तिनिमित्तं राज्ञः संशयं छेत्तुं रैभ्यवसुबृहस्पतिसंवादानन्तरं विप्रलुब्धकसंवादकथनम्, कपिलोप देशतोऽश्वशिरोराजर्षेर्वनगमनम्, तेन कृता यज्ञनारायणस्तुतिः, राज्ञो मुक्तिः

६ वसुराजर्षिणा कृतं पुण्डरीकाक्षपारस्तोत्रकथनम्, एवमुच्चरतस्तस्य देहाद्विनिर्गतव्याधकथितजन्मान्तरवृत्तान्तश्रवणम्, एतत्स्तवप्र- भावतो राजर्षेर्मुक्तिकथनम् इति वसुचरितम्

७ अथ तपोगदाधरस्तोत्राभ्यामुत्तमलोकप्राप्तिकथनम्, रैभ्यस्य तपश्चर्तुं गयायामागमनम्, तत्र तत्तपो द्रष्टुं सनत्कुमारागमनम्, प्रसङ्गेन विशालनृपतिपितृमुक्तिकथनद्वारा गयामाहात्म्यनिरूपणम, गदाधरस्तवप्रभावतो विष्णुप्रादुर्भावः, रैभ्यमुक्तिकथनम्,

९ धर्मव्याधचरितम्, मातङ्गाय व्याधस्य पुत्रीप्रदानम्, मातंगगृहागतेन तेन गोधूमव्रीह्यादिभक्षणे कोटिशो जीवघातित्वनिरूपणम्, तपश्चर्तुं व्याधस्य पुरुषोत्तमाख्यतीर्थागमनम्, व्याधकृतं विष्णुस्तोत्रम्, व्याधस्य वरप्राप्तिर्ब्रह्मणि लयश्च ...

१० मत्स्यावतारः, भूराद्युत्पत्तिः, तेजसश्चन्द्रसूर्यकल्पना, चातुर्वर्ण्यसर्ज्जनम्, नानाविधसृष्ट्या भूरादिलोकपूरणम्, व्यतीतायां तु रात्रौ मत्स्यरूपेण जले प्रविष्टस्य विष्णोर्जलकृता स्तुतिः, कूटस्यविकृतस्य भगवतो मूर्त्या लयवृद्धिनिरूपणम्

११ अथ सृष्टिः, सुप्रतीकादात्रेयप्रसादतो दुर्जयसुद्युम्नयोरुत्पत्तिः, दुर्जये राज्यधुरं न्यस्य सुप्रतीकस्य चित्रकूटगमनम्, दुर्जयेन भारतादि- वर्षाणां स्वायत्तीकरणम्, दुर्जयस्य देवराजं जेतुमुद्यमः, तन्नारदाद- वगम्य दुर्जयं हन्तुमिन्द्रस्य मेरुमुल्लंघ्य पूर्वदेशागमनम्, सुरादीञ्जित्वा प्रतिनिवृत्य पथि समागच्छतस्तस्य हेतृप्रहेत्रोः सुकेशीमिश्रकेश्याख्य. कन्याभ्यां परिणयनम्, ताभ्यां प्रभवसुदर्शनोत्पत्तिः, अरण्ये पर्यटतस्तस्य गौरमुखाश्रमागमनम्,

१२ पुनर्दुर्जयचरित्रम्. गौरमुखकृतविष्णुस्तवेन साक्षान्नारायणदर्शनम्, भगवद्दत्तमणिप्रभावतो विविधैश्वर्यवर्णनम्, अक्षौहिणीबलयुतस्यातिथीभूतस्य तस्य

राज्ञःपरितोषणम्, मणिमाच्छेत्तुं कृतोद्यमस्य राज्ञः मणिसमुत्पन्नैर्योधैः सह सुमहान्संगरः, चिन्तापरिप्लुतस्य गौरमुखस्य पुरतः प्रादुर्भूतस्य हरेः प्रार्थनया चक्रेण सकलसैन्यादिहननम्, अतःपरमिदं क्षेत्रं नैमिषारण्यसंज्ञितं भविष्यतीत्यादिकं कथयित्वा हरेरन्तर्धानम् , ततश्चित्रकूटं समागतदुर्जयकृतश्रीरामस्तवनतस्तस्य मुक्तिः

१३ श्राद्धकल्पः, भगवत्कृतमहदाश्चर्यं निरीक्ष्य तमेवारिराधीयषोर्गौरमुखस्य मुनेः प्रभासनामसोमतीर्थगमनम्, तत्रागतमार्कण्डेयं प्रति गौरमुखकृतः पितृगणनादिप्रश्नः, मार्कण्डेयनिरुक्तः पैतृकः सर्गः, श्राद्धकालाः, श्राद्धैः पितृगणतृप्तिप्रदःकालः, रहस्यापरश्राद्धकालः, नाना विधतीर्थेषु श्राद्धम्, पितृगीतम्

१४ श्राद्धे निमन्त्रणयोग्यायोग्यब्राह्मणादिनिरूपणम, निमन्त्रणादिकम्, ब्राह्मणसंख्यादिकम्, भोजनायोपवेशनादिकथनम्, श्राद्धप्रकारः तत्राभ्यागतातिथिपूजननिर्णयः, होमविधिः, भोजनप्रकारः, अभिश्रवणम्, विकिरान्नदानादिः पिण्डदानादिकम्. श्राद्धान्ते वैश्वदेवादि १५ गौरमुखस्य दशावतारस्तोत्रेण मोक्षः, गौरमुखस्य पूर्वजन्मशतं निशम्य पितृनिष्ट्वा पश्चात्तेन कृतं दशावतारस्तोत्रम्, गौरमुखमोक्षः

१६ सरमोपाख्यानम्, दुर्वाससा शप्तस्येन्द्रस्य वाराणस्यां निवसनम्, दुर्जयं मृतं श्रुत्वा तुरंगमानीय देवान्प्रति विद्युत्सुविद्युदागमनम्, बृहस्पत्युपदेशेन देवानां गोमेधयज्ञारम्भः, शुक्रोपदेशतोऽसुरैश्चरन्तीनां गवां हरणम्, मरुद्भ्यो दैत्यैरपहृता गाः श्रुत्वा सरमानुयायिने- न्द्रेण दैत्यानां पराजयं कृत्वा गवामानयनम्, बहुयज्ञैः संवर्धितेनेन्द्रेण दैत्यचमूहननम्. सरमाख्यानश्रवणादिफलम्.

१७ अथ महातप उपाख्यानम्, श्रुतकीर्त्यात्मजप्रजापालस्य मृगयां चरतो महातपआश्रमगमनम्, मुनिं प्रति तेन मोक्षसंबंधिप्रश्नकरणम्, अहमहमिकया विवदमानेषु देवेषु जनार्दनप्रभाववर्णनद्वारा मोक्षमार्गोपदेशः

१८ अथाग्न्याद्युत्पत्तिवर्णनम्, पञ्चमहाभूतोत्पत्तिः, वैश्वानराद्युत्पत्तिः

१९ अथाग्निप्राशस्त्यम्, पावकाय प्रतिपत्तिथिदानम्, तस्यां होमादिना पितृतृप्तिः, तस्यासुपोषणफलम्, एतच्छ्रवणफलम्.

२० अथाश्विनोरुत्पत्तिः, मरीचिवंशसमुत्पन्नमार्तण्डाय त्वष्ट्रा दत्तं कन्या- दानम्, तस्य तेजोऽसहमानतयाऽश्वरूपिण्यां तस्यामश्विनोरुत्पत्तिः,

मार्तण्डेनोपदिष्टयोरश्विनोस्तपश्चरणम्, ताभ्यामीरितं ब्रह्मपारमयस्तोत्रपाठेन प्रजापतेर्वरप्राप्तिः, ताभ्यां द्वितीयातिथिदानम्, अस्यामुपोषण- फलम्, श्रवणफलञ्च.
२१ गौर्युत्पत्तिः, प्रजाः स्रष्टुमसमर्थस्य रुद्रस्य जले निमज्जनम्, दक्षात्स- वासवानराणामुत्पत्तिः, दक्षयज्ञारम्भः, तत्र ऋषिदेवादीनां नानाविघ्नकर्मणि कल्पना, रुद्रस्य जलाद्बहिर्निर्गमनम्, अन्यकृतसृष्ट्यादिवर्णनं निरीक्ष्य कोपान्नदतो रुद्रस्य श्रोत्रेभ्यो भूतप्रेतादीनामुत्पत्तिः, कुपि- तस्य रुद्रस्य तैः सार्द्धं दक्षयज्ञं प्रति गमनम्, तत्र महासंग्रामवर्णनम्, तत्र भगादीनां नानावयवकृन्तनम्, तत्रागतेन विष्णुना सह प्रवृत्तं युद्धम्, तत्र हरिहरनियोजितनारायणपाशुपतास्त्रयोः प्रवृत्तं व्योम्नि युद्धम्, अन्योन्यातिशयसमेतौ तौ दृष्ट्वा तत्रागतेन परमेष्ठिना हरिहर युद्धप्रशमनम्, तत्र रुद्रभागकल्पना, देवैः कृता रुद्रस्तुतिः, ततस्तुष्टहरेण समग्रदेवानामवयवसमीकरणम्, रुद्राय दाक्षायणीदानम्, सर्वदे- वानां स्वस्वस्थानगमनम्.
२२ गौरीविवाहः, हिमवद्गृहेऽवतरितुं तत्रैव तपश्चरंत्याः सत्याः हिमवद्गृ- हेऽवतरणम्,ततोपि रुद्रं पतिमभिलषंत्यास्तस्यास्तपसाऽऽराधितहरस्य वृद्धब्राह्मणवेषेणागमनम्, स्नातुं गतस्य रुद्रस्य झषादुद्धरंत्यास्तस्याः स्वरूपदर्शनपुरःसरं पाणिग्रहणम्, पित्रे हिमवते तद्वृत्तान्तनिवेदनम्, पित्रा संमानितायास्तस्या विवाहोत्सवारम्भः, तत्र नारदादानीमागमनम्, उमायाः पाणिग्रहणम्, तृतीयायां संवृतत्वेनास्य तत्रलवणनिषेधः, उपोषणफलम्, श्रवणफलञ्च.
२३ अध गणपत्युत्पत्तिः, देवानां कैलासंप्रत्यागमनम्, परमेष्ठिनो हास्यतः कुमारोत्पत्तिः, मोहयन्तं तं दृष्ट्वा गजवक्त्रो भवेति शापदानम्, मस्तकं धुन्वानस्य तस्य देहाद्विनायकानां प्रादुर्भावः, तेषां नामकरणम्,वक्त्रसमुद्भवस्य गजवक्त्रस्य नामकरणम्, सर्वमखादिषु तस्य सर्वोत्कर्षत्वम्, देवैःकृता गणनायकस्तुतिः, एतत्सर्वं चतुर्थ्यां संवृत्तमेतस्मात्तस्यां तिलभक्षणपुरःसरं गणनायकाराधनावश्यकत्वम् एतच्छ्रवणादिफलम्. ..
२४ अथ सर्पोत्पत्तिः, कश्यपस्य कद्रूभार्यायामनन्तवासुक्यादिजननम्, तेषां वंशपरंपरया वृद्धिंगमितैर्मनुजादीनां विनाशः, ब्रह्मणः शरणं गतानां सांत्वनम्, सरीसृपेभ्यो ब्रह्मणा दत्तः शापः, शापानुग्रहश्च, पञ्चभ्यामस्यामुपोषणादिभिः सत्फलावाप्तिः

२५ अथ कार्तिकेयोत्पत्तिः, देवदैत्ययुद्धे वर्तमाने हिरण्यकशिपूप्रभृतिसै- न्याञ्जेतुमशक्यान्वीक्ष्य कमपि बलीयांसं सेनापतिं विधातुमांगिरसो- पदेशतः परमेष्ठिपुरोगमानां देवानां कैलासं प्रति गमनम्, देवैर्विहिता रुद्रस्तुतिः, शक्तिं क्षोभयतस्तस्य कुमारोत्पत्तिः सेनापतिकरणञ्च, , अस्यामुपोष्य पुत्रफलादिप्रप्तिः
२६ अथादित्योत्पत्तिः, सूर्यस्य नानाविधनामहेतवः, तस्यैवान्तःस्थिताना देवानां स्तुतिः । सप्तम्यां सूर्येण मूर्तिरङ्गीकृतातस्तस्यामुपोषणादिभिः शुभफलावाप्तिः.
२७ अथाष्टमात्रुत्पत्तिः, अन्धकात्परित्रस्तब्रह्मादिदेवानां शिवं प्रति गमनम्, समस्तदेवानां सत्कृतिः शंभुकृता, तावदेव तत्रान्धकागमनम्, देव- दैत्यानां तुमुलं युद्धम्, नारदमुखात्प्रवर्तमानं युद्धं श्रुत्वा तत्र नारायणागमनं दानवैः सह युद्धश्च. संगरे संक्रुद्धस्य शंभोर्मुखज्वालावि- निर्गमेन देव्युत्पत्तिः, अष्टमातृगणना, तया शोषिते रक्तेऽसुरचमू- नाशः एतच्छ्रवणफलम्
२८ अथ दुर्गाया उत्पत्तिः, इन्द्रवधाय सिन्धुद्वीपराज्ञस्तपश्चरणम्, मानुषं रूपमास्थाय तत्रागता वेत्रवत्या सह संगमेन वेत्रासुरोत्पत्तिः, तेन कृतो ब्रह्मादिदेवतानां पराजयः, तद्धननोपायं चिन्तयतो ब्रह्मणो देवीप्रादुर्भावः, युद्ध्यन्त्या देव्या वेत्रासुरह- ननं, देवानां स्तुतिश्च, देव्या ब्रह्मण आदेशाद्धिमालयगमनम्, कर्त व्यकार्यं प्रत्यादेशो ब्रह्मणः, नवमीव्रतनिरूपणम्, तत्कर्तुः फलञ्च.
२९ अथ दिगुत्पत्तिः, प्रजाधारणकारणं चिन्तयतो ब्रह्मणः श्रोत्रेभ्यो दश- कन्याननम्, तासाञ्च स्वयंजनितेभ्यो दशलोकपालेभ्यो दानं दश मीतिथिदानञ्च, दशमीव्रतोपवातादिफलश्रुतिः
३० अय धनदोत्पत्तिः, सृष्टिकामस्य ब्रह्मणो मुखाद्वायुनिर्गमनम्, शर्करावर्षितया प्रतिषेधितस्य तस्यानिलस्य मूर्तिमत्करणम, तस्मा एकादशीतिथिदानम्, तद्व्रतप्रकारस्तत्कृतिफलञ्च
३१ अथ विष्णूत्पत्तिः, सृष्टायां सृष्टौ कर्मकाण्डं कर्तुमिच्छोर्नारायणस्प देहतो विष्णूत्पत्तिः, तन्नामकरणं,प्रजापालनं प्रत्यादेशश्च, नानायुधप्रदानम्, द्वादशीव्रतनिरूपणम्, तत्फलञ्च
३२ अथ धर्मोत्पत्तिः, प्रजापालनं चिन्तयतो ब्रह्मणो दक्षिणांगाद्वृषकृतिध- र्मोत्पत्तिः तस्य कृतादियुगेषु ब्राह्मणादिवर्णेषु च भिन्नभिन्नतया स्थितिः, तारां जिघृक्षु सोमेन

धर्महेलनम्, सोमदोषेण कोपितानां देवासुराणां युद्धम्, ब्रह्मण आदेशाद्धर्मतोषणम्, अतः परं त्रयोदशीतिथिदानं धर्माय, तद्व्रतोपोषणादिफलम्

३३ अथ रुद्रोत्पात्तिः, सृष्ट्यवृद्धिकाले कुपितस्य ब्रह्मणो रुद्रोत्पत्तिः, ततः पिशाचाद्युत्पत्तिवर्णनम्,कुपितत्स्य रुद्रस्य स्तुतिपुरःसरं यज्ञेषु रुद्रभागकल्पनम्, तस्मै चतुर्दशीतिथिदानम्, श्रवणफलञ्च ...

३४ पितृसर्गस्थितिवर्णनम्, योगंगतस्य परमेष्ठिनो देहात्पितॄणामुत्पत्तिस्तेषां नामस्थानानि, तेषां वृत्तिकल्पना, अमावास्याया श्राद्धफलम् ...

३५ अथ सोमोत्पत्तिस्थितिरहस्यम्, स्वकन्याभिररममाणस्य चन्द्रमसः दक्षदत्तशापने क्षयः लोकहितार्थं वरुणालयमन्थनात्सोमोत्पत्तिः, पौर्णमास्युपोषणफलम्.

३६ प्राचीनेतिहासवर्णनम्, प्राङ्मणिजानां कृतादिषूत्पत्तिवर्णनम्; ततस्तपसे प्रवृत्तेन प्रजापालराज्ञा कृतां गविन्दस्तुतिः, तस्य ब्रह्मणि लयः

३७ अथ प्राचीनेतिहासवर्णनम्, भगवद्भक्तव्रतानि, देविकातटे तपश्चरत आरुणिमुनेर्वल्कलजिघृक्षयाऽऽगतस्य व्याधस्य ब्रह्मतेजसा प्रधर्षणम्, ब्राह्मणे प्रार्थयमानस्य व्याधस्य तत्र स्थितिः, तत्रागतस्य बुभुक्षितस्य कस्यचिद्व्याघ्रस्य नाशनपूर्वकं व्याधकृता ब्राह्मणरक्षा, नमोनारायणायेति मंत्रं निशम्य व्याघ्रस्य मुक्तिः, व्याघ्रस्य प्राग्जन्मनि शापादिकथनम्, व्याघ्रान्मोचितब्राह्मणकृतो व्याधस्य मोक्षमागार्पदेशः

३८ तस्य व्याधस्य वाताहारतया तपश्चरतस्तत्र दुर्वास आगमनम्, भोजनं याचमानाय तस्मै नभस्तलात्पतितान्नपात्रदानम्, पुनश्च व्याधकृतस्तुत्या तुष्टाया देविकायास्तत्रागमनम्,तस्मै जलदानञ्च, तत्कृतातिथ्येन तुष्टस्य दुर्वाससस्तस्मै वेदादिप्रदानरूपवरस्तन्नामकरणं च

३९ अथ मत्स्यद्वादशीव्रतम्,. सत्यतपोदुर्वासःसंवादः, अवस्थाभेदतः शरीरस्य त्रयो भेदाः, ब्राह्मणादिषु चतुर्भेदं कर्मकाण्डम् दशमीमारभ्य द्वादशीप्रभृतिव्रताचारनियमाः, चतुःकुम्भादिदानम्, व्रतपूर्तौ ब्राह्मणभोजनादिकम्,. व्रतस्यास्याचरणेन महाफलश्रुतिः, अस्य श्रवणफलम् ...

४० कूर्मद्वादशीव्रतम्, पौषशुक्लद्वादशी कूर्मद्वादशी, तत्र कूर्मरूपिहरेः

पूजनम्, ब्राह्मणाय भोजनदक्षिणादिकम्, तद्व्रताचरणफलं च
४१ वराहद्वादशीव्रतम्, माघशुक्लद्वादशीवराहद्वादशी, तत्र नारायणपूजनपुरःसरं द्विजातीनां पूजनं सदक्षिणभोजनं च तस्याः फलश्रुतौ वीरधन्वाख्यानम्, पित्रादेशेन प्रायश्चित्तं चिकीर्षतां मृगरूपधराणां ब्राह्मणानां वधः, देवरातशरणंगतत्य वीरधन्वन उपदिष्टव्रताचरणेन ब्रह्महत्यानिवारणम्
४२ अथ नृसिंहद्वादशीव्रतम्, फाल्गुनशुक्लद्वादशी नृसिंहद्वादशी, तस्यां स्वशक्त्या नृसिंहहरेः पूजनम्, ब्राह्मणेभ्यो दानादिकम्, शत्रुभिर्हृतराज्यस्य वत्सनाम्नो नृपस्य वसिष्ठोपदेशतोऽस्या द्वादश्या व्रताचरणेन पुना राज्यप्राप्तिः
४३ अथ वामनद्वादशीव्रतम्, वामनस्य पूजाप्रकारः, ब्राह्मणभ्यो दानादिकम्, व्रताचरणफलञ्च
४४ अथ जामदग्न्यद्वादशीव्रतम्, वैशाखशुक्लद्वादशी जामदग्न्यद्वादशी, तत्फलश्रुतौ वीरसेनोपाख्यानम्, पुत्रलिप्सया तपश्चरतस्तत्रागतयाज्ञवल्क्योपदिष्टजामदग्न्यद्वादशीव्रताचरणेन नलाख्यपुत्रावाप्तिः, यस्याद्यापि कीर्तिर्भुवि ख्याता
४५ अथ श्रीरामद्वादशीव्रतम्, ज्येष्ठशुक्लद्वादशी रामद्वादशी, दशरथस्यै- तद्व्रताचरणेन श्रीरामादिपुत्रचतुष्टयप्राप्तिः
४६ श्रीकृष्णद्वादशीव्रतम्, पूजादिक्रमः, अस्य व्रतस्याचरणेन वसुदेवस्य श्रीकृष्णाख्यपुत्रफलप्राप्तिः
४७ बुद्धद्वादशीव्रतम्, श्रावणशुक्लद्वादशी बुद्धद्वादशी, अत्र जनार्दनपूजाविधिः, अस्य फलश्रुतौ नृगाख्यानम्, मृगयासक्तचित्तो भ्रममाण इतस्ततो नृगो राजा तरोरधरस्तात्सुप्तं हन्तुमुद्यतानां लुब्धानां नृपदेहनिर्गतया देव्या हननम्, ततो विस्मयाविष्टस्प नृगस्य वामदेवमुखात्स्वप्राग्जन्मकृतं बुद्धद्वादशीव्रताचरणफलमिति ज्ञानम्, अन्यत्फलञ्च
४८ अथ कल्किद्वादशीव्रतम्, भाद्रपदशुक्लद्वादशी कल्किद्वादशी कल्किपूजनं ब्राह्मणेभ्यो दानादिकञ्च, हृतराज्यो विशालाख्यभूपो बदरिका- श्रमे तपश्चरंस्तत्रागताभ्यां नरनारायणाभ्यां द्रविणादिवृद्धिरूपं वरं लेभे तस्मै ताभ्यामुपदिष्टं कल्किद्वादशीव्रतञ्च, अस्याचरणेन पर- त्रेह च सुखप्राप्तिः

४९  अथ पद्मनाभद्वादशीव्रतम्, आश्विनशुक्लद्वादशी पद्मनाभद्वादशी, तस्यां पद्मनाभपूजनम्, भद्राश्वगृहागतेनागस्त्येन राज्ञीमुखावलोकनतश्चतुर्थदिवसपर्यंतं पृथक्पृथगुच्चारणेन तस्य प्राग्जन्मकृतं पद्म नाभद्वादशीफलकथनम्, अगस्त्यगमनञ्च.

५०  अथ धरणीव्रतम्, कार्तिक्यामब्जनाभपूजनविधानम्, तत्फलम्.

५१ अथागस्त्यगीतारम्भः, दुर्वासोवचःश्रवणानन्तरं सत्यतपसो हिमवद्गमनम्, पुनर्भद्राश्वगृहागतेनागस्त्येनेरितं पशुपालननृपमुद्दिश्य परोक्षज्ञानद्वारा मोक्षधर्मनिरूपणम्

५२  मोक्षधर्मनिरूपणम्.

५३  मोक्षधर्मनिरूपणे पशुपालोपाख्यानम्. ...

५४  अथोत्तमभर्तृप्राप्तिव्रतम्, नारदेनाप्सरोभ्यउपदिष्टं सद्भर्तृप्रापकं वसन्त-शुक्लद्वादश्यां विष्णुपूजनविधानम्.

५५  अथ शुभव्रतम्, मार्गशोर्षमास्याचरणीयं शुभव्रतम्, तत्र हरेः पूजनम्, ब्राह्मणेभ्यो रौप्यमहीदानादिकम्, एतद्व्रताचरणेन ब्रह्मवादि-
नृपाय प्रत्यक्षतां गतेन विष्णुना दत्तं पुत्रप्राप्तिरूपवरं प्राप्य पुनस्तपसे युक्तेन राज्ञा कृता स्तुतिः, तत्कृतस्तवतोषितहरेः कौब्जरूपेणागमनम्, नृपाय मोक्षप्राप्तिरूपवरप्रदानं, तत्तीर्थस्य कुब्जकाम्रनामकरणञ्च

५६  अथ धन्यव्रतम्, मार्गशीर्षसितप्रतिपदि   करणीयम्, तत्र विष्णग्ने पूजनम् तत्फलञ्च

५७ कार्त्तिकसितद्वितीयायामारभ्यं कान्तिव्रतं संवत्सरावधि करणीयम्, तत्र केशवपूजनपुरःसरं नक्तादिनियमाः, तत्र होमः, ब्रह्मणेभ्यो दानादिकम् तत्फलम्

५८ फाल्गुनशुक्लतृतीयायां करणीयं सौभाग्यव्रतम्, लक्ष्मीनारायणोमामहेश्वरपूजनम्, व्रते भक्ष्यपदार्थः तत्फलञ्च.

५९  चातुर्मास्याचरणीयं फाल्गुनशुक्लचतुर्थ्यां विघ्नहरं नाम व्रतं, व्रतान्ते ब्राह्मणभोजनादिकम्, अस्य फलञ्च

६०  कार्तिकशुक्लपञ्चम्यां शान्तिव्रतम् वर्षमेकमाचरणीयमिति, अनन्त शायिहरेः पूजनम्,  संवत्सरान्ते  ब्राह्मणभोजनादिकम्, तत्फलम्,

६१ पौषसितषष्ठ्यां कामव्रतम्, सेनानीरूपविष्णुपूजनम् , व्रतान्ते ब्राह्मणभो-
जनादिकम्, तत्फलञ्च.

६२  अथापरमारोग्यव्रतम्, तत्रादित्यरूपविष्णोः पूजनम्, मानसंसरआसा-
द्यानरण्यनृपस्य तज्जं पद्म ग्रहीतुमिच्छोः कुष्ठित्वप्राप्तिः, तत्रागतेन वसिष्ठेन
व्रतोपदेशतस्तन्निवारणम्.

६३ भाद्रपदकृष्णाष्टम्यां करणीयं पुत्रप्राप्तिव्रतम् तत्फलं च

६४ आश्वयुजे मासिं शुद्धनवम्यां शौर्यव्रतम्, तत्र दुर्गादेवीपूजनं तत्फलं च.

६५ कार्तिकशुक्लदशम्यां सार्वभौमव्रतम्, तत्र दिक्प्रार्थना, तत्फलञ्च

६६ नारदपुराणार्थपाञ्चरात्रम्, श्वेतद्वीपंगतस्य नारदस्य नारायणदर्शनं हरिणोपदिष्टं
पाञ्चरात्रमाहात्म्यम्.

६७ अथ विष्ण्वाश्चर्यम्.

६८ अथ प्रागितिहासवर्णनम्,चतुर्युगेषु परमेश्वरस्वरूपम्, अगम्यागम्यादिवर्णनम,
अन्यसंकरे विप्राणां शुद्ध्यादिकम्

६९ अथ नारायणाश्चर्यवर्णनम्, परितोटतः इलावृतोपकण्ठे सरस्तीरे तपश्चरतः
कस्यचिदाश्रमपदं प्राप्तस्यागस्त्यस्य मुनिहुंकारमात्रेण निर्गताभिः कन्याभिरातिथ्यम्,
मुनेर्द्वितीयहुंकृत्या कोटिशः कन्यका- कुलहेमद्रोण्यागमनम्, द्रोणीं प्रविष्टस्यागस्त्यस्य
सप्तसमुद्रनगादिदर्शनञ्च-

७० अथ कृतत्रेताद्वापरादिविषयाः, हरिं क्रतुभिराराधयतोगस्त्यस्य तत्र
ब्रह्मादिदेवानामागमनम्, एतेषां को याज्य इति भ्रान्तमगस्त्यं प्रति रुद्रेणोक्तं त्रिदेवानां
भेदराहित्यम्, तत्रापि नारायणश्रैष्ठ्यम्,कृतादिषु नारायणोपासना, रुद्रेण
नारायणादेशात्पाशुपतशास्त्राणां करणम्

७१ कलियुगीया विषयाः, अगस्त्यस्य रुद्रहृदये कमलासननारायणदर्शनम्,
मोहनशास्त्रकरणहेतुः, तत्र शतशृङ्गे कमलासनप्राप्तवरे गौतमे निवसति
कस्यचित्कालस्य द्वादशाब्दिकानावृष्ट्या क्षुत्क्षामवि- प्रपालनम्, निवृत्तायां च
तीर्थयात्रानिमित्तं गन्तुकामैर्विप्रैर्मायामय्या गोः प्रेषणेन गौतमोपरि
गोहत्यानिमित्तमिथ्याभिशापः गोहत्यात्रस्तेन गौतमेन गंगानयनस्तन्निवारणम्, तत्र
सप्तर्षीणामागमनम् ब्राह्मणानां छलं विज्ञाय तेभ्यः कलौ

पाखण्डित्वप्राप्तिनिमित्तशापदानम्, तां नदीं गोदावरीं विदुस्तत्र गोदानमाहात्म्यम्, ततः कलियुगसमुत्पन्नानां ब्राह्मणानां श्रेयसे शिवेन निश्वाससंहिताकरणम्.
७२ अथ प्रकृतिपुरुषनिर्णयः, त्रयाणां देवानां यजनादिकम्
७३ अथ वैराजवृत्तम्, प्रजाः स्रष्टुं ब्रह्मणादिष्टः शिवो जले निमज्जन्नंगु
ष्ठमात्रपरिमितपुरुषं दशादित्यान् ददर्शेति तं प्रति शंभुकृता स्तुतिः, ततस्तुष्टेन विष्णुना शंभवे वरप्रदानम्
७४ अय भुवनकोषवर्णनम्, स्वायंभुवमनोः प्रियव्रतोत्तानपादौ पुत्रौ, तयोर्मध्ये प्रियव्रतपुत्रचरित्रवर्णनम् तत्पुत्रेभ्यः सप्तद्वीपदानम्, तेषामपि पुत्रसंख्या, नाभेः सर्गकथनम्
७५ अथ जम्बूद्वीपमेरुनिरूपणम्, जम्बूद्वीपयोजनपरिमाणम्, तत्रस्थितानां पर्वतानां वर्णनम्, तत्रस्थानामन्येषां पर्वतानां परिमाणञ्च, जंबुद्वीपस्थानां खण्डानां वर्णनम्, तेषां परिमाणं च, मेरुपर्वतपरि- माणम्, मेरोः पूर्वादिप्रदेशस्थाः पर्वताः, मेरोरुपर्यधस्तान्मानम्, मेरोः पार्श्वतः स्थिताश्चत्वारो देशाः, तत्र मनोवती नाम ब्रह्मसभा, तत्परिमाणं च, तत्र देवादीनां स्थितिः ...
७६ अथाष्टदिक्पालपुर्यः, तत्रामरावत्यैश्वर्यादिवर्णनम्, सैश्वर्याष्टदिक्पालपुरीनामानि.
७७ अथ मेरुवर्णनम्, चत्वारो मर्यादापर्वताः, तत्र मन्दराचलशृङ्गस्यक दम्बवृक्षवर्णनम्, तद्भूतयः गन्धमादनपर्वतस्थजम्बूपादपवर्णनम् तत्र कर्दममुनेराश्रमपदञ्च, तथैव ताम्राभस्य शैलस्य पतंगस्य चांतरे महत्सरस्तस्य च मध्ये महाशिखरः, तस्य चोपरि महारथ्या तत्र विद्याधरपुरम्, तत्र पुलोमनामविद्याधरनिवासस्थानम्, तेषां परिमाणं च, तथा विशालाचलेन्द्रस्य श्वेतस्य चान्तरे सरस्तस्य पूर्वतीरे महदाम्रवनम्, तत्र देवादीनां निवासः सुमूलाचलेन्द्रस्य वसुधारस्य चान्तरे बिल्वस्थली, वसुधाररत्नधारयोर्मध्ये किंशुकवनम, तत्र प्रति- मासमादित्यावतरणम्, पञ्चकूटस्य कैलासस्य चान्तरे स्वर्गसोपान- मिव भूमण्डलम्, तद्विस्तारायतपरिमाणम्, सुपार्श्वशिखिशैलयोर्मध्ये भौमशिलातलम्, तस्य मध्ये त्रिंशद्योजनविस्तीर्णं वह्निस्था- नम्, शैलवरयोः कुमुदाञ्जनयोरन्तरे शतयोजनविस्तीर्णा मातुलुं- गस्थली, शैलयोः पिञ्जरगौरयोरन्तरे नारायणायतनम्, शुक्लपाण्डु- रयोरन्तरे त्रिंशद्योजनविस्तीर्ण एकशिलोद्देशः, तत्फलरससंभूतजा- म्बूनदसुवर्णवर्णनम्,

विपुलशृंगसंभूताश्वत्थपादपवर्णनम्, सुपा- र्श्वशृंगस्य न्यग्रोधपादपवर्णनम् तत्परिमाणं च.
७८ मन्दरादिपर्वतचतुष्टयवर्णनम्, चतुर्षु गिरिषु अरुणोदादिसरांसि, तेषां पूर्वादिदिक्षु स्थितिः, अरुणोदयस्य प्राच्यां शैलाः, मानस दक्षिण- स्थितानां पर्वतानां वर्णनम्, असितोदस्य पाश्चात्याः पर्वताः, महाभद्रस्योत्तरतः पर्वतानां कथनम्
७९ अथ मेरोर्द्रोणीनां निरूपणम्, तत्र श्रीसरोबिल्ववनवर्णनम्, तद्विस्तरायतप्रमाणम्, तद्वृक्षशोभावर्णनम्,तत्र मुन्यादीनामाश्रमाः, सुखानंदीतीरे तालवनपरिमाणादिकम्
८० अथ मेरोर्द्रोण्यादिवर्णनम्, शिशिरपतङ्गयोर्मध्ये शुक्लभूमिरुदुम्बरंनाम वनञ्च, तत्परिमाणम्, तत्र निष्कम्पा दीर्घिका, तस्या मध्ये न्यग्रोधवृक्षोपरि चन्द्रशेखरवसनम्, सहस्रशिखरस्य कुमुदस्यान्तरे पञ्चाशद्योजनायामं विंशद्योजनविस्तृतमिक्षुक्षेपोच्चशिखरम्, तत्रेन्द्राश्रमः, शंखकूटऋषभयोर्मध्ये पुरुषस्थली, कपिञ्जलनागशैलयोरन्तरे द्राक्षादि- वृक्षमण्डिता स्थली तत्प्रमाणञ्च, पुष्करमहामेघयोरन्तरे पाणितलप्रख्यास्थली, तत्प्रमाणञ्च.
८१ अथ तेषुतेषु देवानामवकाशा वर्ण्यन्ते, सीताख्ये गिरौ महेन्द्रक्रीडास्थानम्, तत्र पारिजातवनञ्च, कुञ्जरे गिरौ दानवानां पुराणि, वज्रके पर्वते राक्षसानां पुराणि, महानीले शैले किन्नराणां पञ्चदशसहस्राणि पुराणि, वेणुमतिपर्वते विद्याधरपुरत्रिकम्, कुञ्जरे गिरौ पशुपतिनिवासस्थानम्, वसुधारेपि वृषभध्वजस्थानम्, वसुधार- रत्नधारयोर्मूर्ध्नि वसुसप्तर्षीणां पुराणि, एकशृंगे गिरौ परमेष्ठिनः स्थानम्, गजपर्वते भगवतीस्थानम्, प्रभेदकस्य पश्चिमे दले देवदानवसिद्धादिपुराणि, तत्र स्थितायां महाशिलायां प्रति- पर्वणि सोमस्यावतरणम्, त्रिकूटे ब्रह्मणः स्थानम्, शृङ्गाख्यपर्वते पूर्वा- दिक्रमेण नारायणादिदेवतानां निलयाः, जातुच्छमहापर्वते त्रिंशद्योजनमण्डल नदजलं नाम सरः, उपयुक्तानामष्टपर्वतानां वर्णाः पृथ्वीस्थितिः
८२ अथ नद्यवताराः, इन्द्रगजेन क्षोभिताया आकाशगामिन्याः सरितो मेरोरुपरि पतनम्, मेरुकटतटेभ्यः प्रस्खलितायाः षष्टिसहस्रयोजनान्निरालंबं पतमानायाश्चातुर्विध्यम्, तासां चतसृणां पृथक्पृथक्खण्डेषु प्रवृत्तिः, तत्तद्देशानां जीवनभूता नद्यः

८३ अथ नैषधस्थकुलाचलजनपदनदीवर्णनम्, सप्त कुलपर्वताः, तन्निवासिनां जनपदानां नामानि, तेषां पानीयमहानदीनां नामानि.
८४ मेरोर्दक्षिणोत्तरवर्षवर्णनम्, मेरोर्दक्षिणेन श्वेतस्योत्तरेण च रम्यकंनाम वषंम्, तत्रत्यन्यग्रोधफलप्राशिनामृद्धिवर्णनम्, श्वेतस्योत्तरे त्रिशृङ्गस्य च दक्षिणे हिरण्मयंनाम वर्षम्, तत्रत्यानां वृक्षाणां समृद्धिवर्णनम्, तत्रदेशस्या वृक्षाः, उत्तरशृंगाद्दक्षिणसमुद्रान्तमुत्तरकुरवस्तत्र वस्त्रा- भरणाद्यैश्वर्यजनका वृक्षाः, तत्रत्यानां पुरुषाणां परमायुः, चन्द्रका- न्तसूर्यकान्तनगयोर्मध्ये चन्द्रावर्ता नाम नदी, सूर्यद्वीपे सूर्यावर्ता नाम नदी, तत्रार्कस्थानम्, तमुल्लंघ्य भद्राकारं नाम खण्डम्, तत्र वायोरधिष्ठानम् ...
८५ अथ भारते नवखण्डवणर्नम्, नवभेदं भारतम्, तत्र सप्तकुलपर्वताः क्षुद्रपर्वताश्च, हिमवत्पादविनिर्गता नद्यः, पारियात्रोद्भवा नद्यः, ऋ- क्षप्रसूतानद्यः, विन्ध्यपादोद्भवाः सरितः, मलयजा नद्यः, शुक्तिमत्प्रभवा नद्यः, जम्बुद्वीपप्रमाणम्.
८६ अथ शाकद्वीपनिरूपणम्, तत्प्रमाणम्, तत्रत्यानां स्थितिश्च, सप्तकुल- पर्वतास्तदुपनामानि, तत्रत्याः सप्तमहानद्यः.
८७ अथ कुशद्वीपवर्णनम्, तत्र क्षीरोदः समुद्रः द्वीपपरिमाणम्, एतेषां द्विना- मवर्णभेदः, तत्र द्विनाम्न्यो नद्यः
८८ अय क्रौंचद्वीपवर्णनम्, तन्मानम्, तत्र सप्तप्रधानपर्वताः, तत्र वर्षाणि, तत्रापि सप्तनद्यः, तस्य परितः समुद्रः.
८९ अथ शाल्मलीद्वीपवर्णनम्, तन्मानम्, सप्तपर्वतास्तावत्यो नद्यस्तत्समुद्रश्च, अथ षष्ठगोमेदकथनम्, तत्र द्वौ प्रधानपर्वतौ तत्समुद्रः, पुष्क- राख्ये खण्डे मानसपर्वतः, प्रतिकल्पमेतेषां मण्डलानां स्थितिः.
९० अन्धकासुरवधाकांक्षया ब्रह्मविष्ण्वोः कैलासागमनम्, तत्रैकीभूतानां त्रिदेवानामेकीभूतया दृष्ट्या त्रिवर्णदेव्युत्पत्तिः, तस्यै वरप्रदानम, तत्त्रि- मूर्तिदेव्याजगदुत्पत्त्यादिकथनम्, तासां श्वेतादिपर्वतगमनम्, ब्रह्मसृष्टिवर्द्धनञ्च.
९१ अथ सरस्वतीवर्णनादिकम्, सरस्वतीं प्रति ब्रह्मणा कृता स्तुतिः,

९२ वैष्णवीमाहात्म्यम्, मन्दराचले तपश्चरन्त्या देव्या कुमारीणामुत्पत्तिः, तत्र पुरनिर्माणम्, कन्यानामानि, देव्यन्तिकमागत्य महिषासुराय देवीरूपं कथयित्वा नारदगमनम्

९३ मंत्रिमहिषासुरसंवादः, महिषस्य मन्त्रिभिः साकं देव्यानयनविचारः, देवीं प्रतिदूतप्रेषणम्, योद्धुं दैत्यचमूप्रयाणम्

९४ अथ सुरासुरयुद्धवर्णनम्, असुरैः सुरसैन्येषु भग्नेषु विद्रुतानां तेषां ब्रह्मलोकगमनम्

९५ अथ महिषासुरवधः, आगतेन दूतेन कथिता महिषासुरोत्पत्तिः, परिचारिकया परिधर्षितस्य दूतस्य गमनम्, देव्या युद्धे प्रयाणम्, ताभिः कन्याभिर्हतसैन्यस्य महिषस्य देवीं प्रति धावमानस्य दशसहस्रवर्ष पर्यन्तं देव्या सह युद्धम्, देवैः स्तुतया देव्या महिषासुरहननम्.

९६ त्रिशक्तिरहस्ये रौद्रीव्रतम्, रुरुदैत्येन पराजितैर्देवैः स्तुतया रौद्र्या देव्या तद्धननम्, अन्यासाञ्च तासां सर्वासां तत्रागतेन रुद्रेण भक्ष्यकल्पनम्, रुद्रकृता स्तुतिः, त्रिशक्तिसर्गश्रवणफलम्.

९७ अथ रुद्रमाहात्म्यम् ब्रह्मणोक्तकपालशब्दात्कुपितेन रुद्रेण ब्रह्मशिरःकृन्तनम्, करलग्नकपालनिवृत्तये सर्वतीर्थेषु पर्यटन्वाराण सीमागत्य गंगायां स्नातस्य रुद्रस्य हस्तात्कपालनिवृत्तिः, तत्रा गतेन ब्रह्मणा कपालमोचनेति तत्तीर्थनामकरणम्, रुद्रस्य कैलासगमनम्

९८ अथ पर्वाध्यायः, कुठारेण दर्भानुद्धृतवतः सत्यतपसोंगुल्याश्छिन्नाया निःसृतं भस्मावलोक्य केनापि किन्नरेण विज्ञापितयोरिन्द्रविष्ण्वोरस्मै वरप्रदानम्, सत्यतपोरुणिमुक्तिः

९९ अथ तिलधेनुदानमाहात्म्यम्, कार्तिकशुल्लद्वादश्यां गुरुपूजितहरिदर्शनम्, संवत्सरान्ते गुरुप्रसादनम्, एकादश्यामुपोष्य देवालयं गत्वेन्द्रादिदेवपूजनम्, ब्राह्मणभोजनादि होमादिकं च, तत्र वसिष्ठश्वेतसंवादरूपेतिहासः, विनान्न्नं पीडिताय श्वेताय विनीताश्वोपाख्यानकथनम्, अन्नदानमहिमा, तिलधेनुदानविधिः, अस्यश्रवणफलम्.

१०० जलधेनुदानविधिः, तद्दानफलम्

१०१ अथ रसधेनुदानमाहात्म्यम्, तद्दानविधानं फलञ्च.

१०२ गुडधेनुदानमाहात्म्यम्, तद्विधानं दानफलं श्रवणफलञ्च

१०३ शर्कराधेनुदानमाहात्म्यम्, तद्विधानं तद्दानफलञ्च.

१०४ अथ मधुधेनुदानमाहात्म्यम्, तद्विधानं, तत्फलञ्च.

१०५ अथ क्षीरधेनुदानविधिः, तत्फलम्. ...

१०६ अथ दधिधेनुदानमाहात्म्यम्, तद्विधानम्, फलञ्च.

१०७ अथ नवनीतधेनुदानमाहात्म्यम् , तद्विधानं तद्दानफलं दर्शन फलञ्च.

१०८ अय लवणधेनुदानम्, तद्विधानं फलञ्च

१०९ कार्पासधेनुदानमाहात्म्यम् तद्विधानं फलञ्च

११० अथ धान्यधेनुदानमाहात्म्यम्, तद्विधानं फलञ्च. ...

१११ कपिलाधेनुदानमाहात्म्यम्, तद्विधानं फलञ्च, कपिलालक्षणानि.

११२ अथोभयतोमुखीगोदाने हेमकुम्भदानम, पुराणप्रशंसा, कपिलामाहा- त्म्यम्, शूद्रात्कपिलादाननिषेधः, प्रतिग्रहकर्तुर्द्विजस्य वर्जनम् तेनसह व्यापारिणां प्रायश्चित्तम्, कपिलायाः पृथिवीत्वनिरूपणम्, कपिलादानविधिः, तत्फलञ्च, वसिष्ठेनोपदिष्टस्य श्वेतस्य मुक्तिः, पुराणानां गणना, अस्य श्रवणफलञ्च ... ११३ भगवत्स्तुतिः, कल्पान्ते रसातलगतया धरण्या कृता माधवस्तुतिः, श्रव-
णफलञ्च.

११४ अथ श्रीवराहावतारः,वराहरूपिणं देवं स्तुवन्तीमहीकृता योगसांख्य-
विनिश्चयात्मकाः प्रश्नाः.

११५ अथ विविधधर्मोत्पत्तिः, प्रतिद्वादशि वराहपूजनम्,, व्राह्मणस्य भग-
वत्कर्मनियमः , क्षत्रियाणां भगवत्कर्मनियमः, भगवत्कर्मस्थानां वैश्यानाँ
कर्म, शूद्रस्य कर्माणि, योगप्राप्तिहेतुः

११६ अथ सुखदुःखनिरूपणम्, दुःखरूपाणि कर्माणि सुखरूपाणि
कर्माणि.

११७ अथ द्वात्रिंशदपराधाः, आहारानाहारादिद्वात्रिंशदपराधाः, अन्यदृढ-
व्रतम्, कर्मणामुत्तमं कर्म

११८ अथ देवोपचारविधिस्तत्कृतफलञ्च.

११९ अथ भोज्यनियमविधिः, प्रापणद्रव्यकर्मण्यभोज्यनियमविधिः

१२० अय त्रिसंध्यामंत्रोपस्थानम्

१२१ अथ जन्माभावः, भगवत्परायणानां पुरुषाणां लक्षणानि, प्रसन्नानां पुरुषाणां धर्मः, अगर्भप्रापकधर्माः

१२२ अथ कोकामुखमाहात्म्यम्, शकाधिपनृपस्य प्राग्जन्मवृत्तान्तम्, चिल्ली-गस्त्ययोः परासिद्धिस्तत्क्षेत्रकृतदानादिफलम्.

१२३ अथ सुमनोगंधादिमाहात्म्यम्, कार्तिकशुद्धद्वादश्यां प्रबोधिनी कर्म, शैशिरं कर्म, द्वादशीमाहात्म्यम्, हरये गन्धपत्रसमर्पणम्
१२४ अथ ऋतूपस्करम्, फाल्गुनशुक्लद्वादश्यां हरेः पूजनम्, तद्व्रताचरणफलम् भगवतोपदिष्टमृतुकर्म, तच्छ्रवणादिफलञ्च.
१२५ अथ मायाचक्रम्, वसुधया प्रार्थितेन वराहरूपिहरिणा तस्यै मायायाः सर्वत्र व्याप्तिकथनम् सोमशर्मणे द्विजाय प्रदर्शितं मायाख्यानम् एतच्छ्रवणफलम्.
१२६ अथ कुब्जाम्रकमाहात्म्यम्, कुब्जाम्रके तपश्चरतो रैभ्यस्य तपसा परितुष्टेन भगवतान्यतीर्थानां माहात्म्यकथनम्, कुब्जाम्रके स्थितस्य कुमुदाकारतीर्थस्य माहात्म्यम, तत्रस्थमानसतीर्थमहिमा, मायातीर्थमाहात्म्यम्, सर्वात्मकतीर्थमाहात्म्यम्, पूर्णमुखतीर्थमाहात्म्यम्,करवीरपुण्डरीकाख्यतीर्थफलम्,अग्नितीर्थमाहात्म्यम्, वायुतीर्थशुक्रतीर्थमा० सप्तसामुद्रकं तीर्थम्, मानससरोनामतीर्थम्, कुब्जाम्रके वृत्तं व्यालीनकुलाख्यानम्, एतत्पठनफलम्,
१२७ अथ ब्राह्मणदीक्षासूत्रवर्णनम्, दीक्षितानां वर्ज्यावर्ज्यकर्माणि, दीक्षा- ग्रहणप्रकारः
१२८ अथ कङ्कताञ्जनदर्शनम्, क्षत्रियदीक्षाप्रकारः, वैश्यदीक्षाप्रकारः, शूद्रदीक्षाप्रकारः, चतुर्णां वर्णानां छत्रम् दीक्षितानां कर्तव्यता,. स्नानोप कल्पान्तेषु कर्तव्यता .-.
१२९ संध्यादिप्रकारः, विष्णुपूजनादिकञ्च, ताम्रोत्पत्तिस्तन्माहात्म्यञ्च. ...
१३० राजान्नभोगे प्रायश्चित्तम्.

१३१ अथ दन्तकाष्ठचर्वणप्रायश्चित्तम्
१३२ अथ मृतकस्पर्शप्रायश्चित्तम्, मैथुनं कृत्वा शवस्पर्शदोषः, तद्दोष-
निवारणप्रायश्चित्तम्, शवस्पर्शदोषः, रजस्वलां दृष्ट्वा भगवत्स्पर्शनतः पापम्,
तत्प्रायश्चित्तम्
१३३ अथ पूजासामयिकगुदरवपुरीषोत्सर्गयोः प्रायश्चित्तम्
१३४ अथ पूजादिसामयिकान्यापराधेषु प्रायश्चित्तम्, मौनत्यागप्रायश्चित्तम्, नीलवस्त्रं धृत्वा भगवत्पूजनादिप्रायश्चित्तम्, विनाविधिं भगवत्स्पर्शने प्रायश्चित्तम्, आचारविधिः, क्रुद्धतया भगवदुपसर्पणे दोषः प्रायश्चित्तञ्च. १३५ जालपादभक्षणापराधप्रायश्चित्तम्, रक्तवस्त्रं धृत्वा भगवदुपसर्पणे दोषः प्रायश्चित्तम्, विनादीपेनान्धकारे भगवत्सेवादिना दोषः प्रायश्चित्तञ्च, कृष्णवस्त्रं धृत्वा विश्वपूजने दोषः प्रायश्चित्तञ्च, अधौतवस्त्रं धृत्वा भगवत्कर्मकरणे दोषः प्रायश्चित्तञ्च, श्वानोच्छिष्टदाने दोषः, प्रायश्चित्तञ्च, वराहमांसं भुक्त्वा भगवत्सेवायां दोषः प्रायश्चित्तञ्च, जालपादं भक्ष- यित्वा विष्णुपूजनादौ दोषः प्रायश्चित्तञ्च.
१३६ अथ प्रायश्चित्तकर्मसूत्रम्, दीपं स्पृष्ट्वा विष्णुकर्मणि दो० प्रा०, श्मशानं गत्वाऽस्नात्वा विष्णुपूजने दो० प्रा०, विष्णुना श्मशानजुगुप्सनकारणम्, वराहमांसेन प्रापणे कृते दो० प्रा०, मद्यं पीत्वा विष्णूपसर्पणे दो० प्रा० भगवद्भक्तः कौसुम्भं शाकं भक्षयेत्तद्दो० प्रा०, नवान्नमदत्त्वा भोजने दो० प्रा०, गन्धमाल्यान्यदत्त्वा विष्णवे धूपदाने पद्भ्यामुपानहौ वहन्भगवत्कर्मपरायणे दो० प्रा०, भेर्यादिशब्दमकृत्वा भगवत्प्र बोधने दो०प्रा० बहुतरमन्नं भुक्त्वाऽजीर्णेनपरिप्लुतेऽस्नाते भगवत्कर्मणिप्रवृत्तौ दो०, अस्य पठनफलम्.
१३७ अथ गृध्रजम्बूकाख्यानम्, चकतीर्थागमनफलम्,सोमतीर्थमाहात्म्यम्, तत्रसोमाय विष्णुना वरप्रदानम्, शृगालीगृध्रयोस्तत्र क्षेत्रे मरणेन मानु- षत्वप्राप्तिः, तदाख्यानम्,
१३८ अथ खञ्जरीटोपाख्यानम्, सौकरवे मृतस्य खञ्जरीटस्य क्रीडद्भि-
र्बालकैर्गंगाम्भसि क्षेपणेन मानुषत्वप्राप्तिसंबध्याख्यानम्, तच्छ्रवणफलम्.
१३९ सौकरवमाहात्म्यम, गोमयमाहात्म्यम्, स्नानोपलेपने धूमे सलिल- दाने फलम्, संमार्जनफलम्, गायनफलम, श्वपाकवृत्तम्, सत्यमाहात्म्यम्, एकगीतफलदानेन ब्रह्मरक्षसो देवाग्रे नृत्यमानस्य मुक्तिफलम्-

१४० कोकामुखमाहात्म्यम्, तत्र पर्वतात्पतितायां विष्णुधारायां स्नानात्फलम्, तत्र विष्णुपदं नाम स्थानम्, तत्र स्नानफलम्, विष्णुसरोनाम तीर्थमा० सोमतीर्थमा० तुङ्गकूटेतिख्याततीर्थ मा०, अत्राग्निसरोनाम्- तीर्थमा० ब्रह्मसरः क्षेत्रमा०, धेनुपरतीर्थमा०, धर्मोद्भवतीर्थमा०, पापप्रमोचननामतीर्थमा०, यमव्यसनकं तीर्थम्, मातंगा तीर्थमा०, वज्रभवं नामतीर्थम्, शक्ररुद्रेति विख्यातं तीर्थम्, विष्णुतीर्थम्, मत्स्यशिलानामतीर्थम्, एतत्पठनफलम्

१४१ अथ बदरिकाश्रममाहात्म्यम्, तत्रत्यं ब्रह्मकुण्डमितिख्यातं तीर्थम्, अग्निसत्यपदं नाम तीर्थम्, तत्र इन्द्रलोकमितिख्यातो विष्ण्वाश्रमः, पञ्चस्रोतस्तीर्थम्, चतुःस्रोतस्तीर्थम्, वेदधारं नाम तीर्थम्, द्वादशा दित्यकण्डं नाम तीर्थम्, लोकपालं नामतीर्थम्. मेरोर्वरं नाम तीर्थम्, मानसोद्भेदं नाम तीर्थम्, पञ्चशिरं नाम तीर्थम्, तच्चिह्नम्. सोमाभिषेकं नाम तीर्थम्, उर्वशीकुण्डं नाम तीर्थम् , अस्य श्रवणफलम्.

१४२ अथ गुह्यकर्ममाहात्म्यम्, भगवति चित्तधारणत्वम्, ऋतुकाले गमननिषेधः, ऋतुकालानंतरं स्त्र्यभिगमनम्, शयने स्त्रीदर्शननिषेधः, संभोगानन्तरं स्नानम्, अपूर्णे ऋतुकाले स्त्रीगमननिषेधः ऋतुस्नातायामनभिगमने दोषः, स्त्रीगमनदिवसः संन्यासयोगः, एतच्छ्रवणफलम्.

१४३ अथ मन्दारमहिमनिरूपणम्, मन्दारतीर्थमाहात्म्यम्, तत्रप्रापणो नामगिरिः स्नानकुंडं नाम तीर्थम्, मोदनं नामतीर्थम्, वैकुण्ठकारणं नाम तीर्थम्, सोमस्रोतोनामतीर्थम्, पूर्वेण गुह्यनामतीर्थम्, विन्ध्यविनिःसृतं गुह्यं तीर्थम्, पश्चिमपार्श्वे देवसमन्वितं चक्रवर्तं नाम तीर्थम्, गुह्यो गभीरको नाम महाह्रदः, दक्षिणे चक्रम्, वामे गदा, एतच्छ्रवणफलम्.

१४४ अथ सोमेश्वरादिलिङ्गमुक्तिक्षेत्रत्रिवेण्यादिमाहात्म्यम्, शापनिवृत्तये तपश्चरते सोमाय संतुष्टेन हरेण वरदानम्, रेवायास्तपसा तुष्टेन शंभुना तस्यै लिंगरूपेण तव गर्भे स्थास्यामि इति वरप्रदानम्, ततः परं रेवाखण्डमिति ख्यातम्, गण्डक्या तपसा स्तुत्या च संतुष्टेन हरिणा तस्यै शालग्रामशिलारूपी तव गर्भगतो भविष्यामि इति वर- प्रदानम्, बाणगंगोत्पत्तिः, रावणतपोवनम्, नर्तनाचलोत्पत्तिः, मुक्तिक्षेत्रे गण्डकीसमुत्पत्तिः, तन्माहात्म्यम्, त्रिवेणीप्रकटनं, परस्परं शाप- प्रदानतो गजग्राहत्वमाप्तयोर्जयविजययोस्तत्र मोक्षः हरिहरप्रभं तीर्थम्, हंसतीर्थम्, यक्षतीर्थम्,

१४५ शालग्रामक्षेत्रमाहात्म्यम्, तपस्यते सालंकायनाय वरदानम्, नन्दिके. श्वरोत्पत्तिः, तत्र च बिल्वप्रभं नाम क्षेत्रम्, चक्रस्वामितीर्थम्, विष्णुपदं नाम क्षेत्रम्, ह्रदस्रोतस्तीर्थम्,शंखप्रभं क्षेत्रम्, गदाकुण्डं क्षेत्रम् अग्निप्रभं नाम क्षेत्रम्, सर्वायुधं तीर्थ, देवप्रभक्षेत्रम्, विद्याधरं नाम क्षेत्रम्, पुण्यनदी नाम तीर्थम्, गन्धर्वक्षेत्रम्, देवह्रदं क्षेत्रम्, देवनद्योः संभेदः, श्वेतगंगा, त्रिशूलगगा, सिद्धाश्रमः, तन्माहात्म्यम्

१४६ अथ रुरुक्षेत्रस्थहृषीकेशमाहात्म्यम्, रुरुतीर्थप्राकट्येतिहासः, तपस्यतो देवदत्तस्य पदच्युतिं शंकमानेनेन्द्रेण तपःखण्डनम्,पुनर्निर्वेदमाप्तस्य भृगुतुङ्गे तपस्यतस्तस्य शिवेन वरप्रदानम्, ततःपरं समङ्गेति तीर्थख्यातिः, प्रम्लोचाप्सरसः कन्यकां प्रसूय स्वर्गं गता  सती रुरुभिर्मृगैः पोषिताया अतएव रुरुनाम्न्याः कन्यकायास्तपसा तुष्टेन हारिणा त्वन्नाम्ना ख्यातं भविष्यति क्षेत्रम् इति वरप्रदानं तस्मै.

१४७ अथगोनिष्क्रमणमाहात्म्यम्,    महादेवतेजसाभस्मोद्भूतमाश्रमं वीक्ष्य क्रोधकलुषितेनौर्वेण दत्तशापप्रभावतस्तप्तस्य महादेवस्य नारायणसन्निधावागमनम्, ततो गवां स्नापनतो रुद्रतापनिवृत्तिः, ततः परं गोनिष्क्रमं नामतीर्थं, तत्र स्नानदानादिफलम्, पञ्चक्रोशतीर्थम्, एतच्छ्रवणफलम्-

१४८ अथ स्तुतस्वामिमाहात्म्यम, मात्सर्यदोषाः, पञ्चारुमेतिख्यातं तीर्थम्, भृगुकुण्डं नामतीर्थम्, मणिकुण्डं नामतीर्थम्, धूतपापं नामतीर्थम्, तत्र स्नानादिजन्यं फलम्

१४९ द्वारकामाहात्म्यम्, द्वारकापरिमाणम्, यादवकुलस्य दुर्वाससः शापकारणकथनम्, तत्र पञ्चाप्सरस्तीर्थम्, शतशाखःप्लक्षः, तत्र प्रभासं नामतीर्थम्, तत्राश्चर्यम्, पञ्चपिण्डतीर्थम्, संगमनक्षेत्रम्, हंसकुण्डं तीर्थम्, कदम्बतीर्थम्, चक्रतीर्थम्, रैवतकतीर्थम्, विष्णुसंक्रमणं तीर्थम्, एतत्पठनफलम्

१५० अथ सानन्दूरमाहात्म्यम्, यत्र रामगृहं नामतीर्थम्, रामसरोनामतीर्थम्, ब्रह्मसरः, संगमनं नामतीर्थम, शक्रसरोनामतीर्थम्ः, शूर्पारकं नामक्षेत्रम्, जटाकुण्डं तीर्थम्, एतत्पठनफलम् ...

१५१ अथ लोहार्गलमाहात्म्यम्, पञ्चसरोनाम क्षेत्रम्, नारदकुण्डं तीर्थम्, वसिष्ठकुण्डम्, पञ्चकुंडम्, सप्तर्षिकुण्डम् शरभङ्गकुंडम्, अग्निसरोनाम कुंडम्, वैश्वानरकुंडम्, कार्तिकेयकुंडम्, उमाकुंडम्, महेश्वरकुण्डम्, ब्रह्मकुण्डम्, पठनफलम्.

१५२ अथ मथुरामाहात्म्यम्, तत्र विश्रान्तिसंज्ञकं तीर्थम्, प्रयागं नामतीर्थम्, कनखलं तीर्थम्, तिन्दुकं क्षेत्रम्, सूर्यतीर्थम्, ऋषितीर्थम्, कोटि तीर्थम्, वायुतीर्थम्.
१५३ अथ मथुरामाहात्म्यम्, नवकं तीर्थम्, संयमनं तीर्थम्, निषादाख्यानम्, कुन्दवनं नाम वनम्, काम्यकवनम्, बकुलवनम्, भद्रवनम्, खादिरंवनम्, महावनम्, लोहजंघवनम्, बिल्ववनम्, भाण्डीरवनम्, वृन्दावनम्.
१५४ अथ यमुनातीर्थप्रभावः, पीवरीवृत्तान्तम्, धारापतनकतीर्थमाहात्म्यम्, नागतीर्थम्, घण्टाभरणकं तीर्थम्, सोमतीर्थम्, मानसं तीर्थम्, विघ्नराजतीर्थम्, कोटितीर्थम्, शिवक्षेत्रम्
१५५ अथाक्रूरतीर्थप्रभावः, सुधन्ववृत्तान्तम्.
१५६ अथ मथुराप्रादुर्भावः आदित्यस्थानम्.
१५७ अथ मलयार्जुनतीर्थादिस्नानादिप्रशंसा, भांडह्रदं तीर्थम्, वीरस्थलंनाम तीर्थम्, कुशस्थलं ती० पुष्पस्थलं ती० सप्तसामुद्रकं कूपम्, वसुपत्रं तीर्थम्, फाल्गुनकं तीर्थम्, वृषभाञ्जनकतीर्थम्, तालवनम्, स्वच्छजलं कुंडम्, सपीठकं ती० प्रसन्नसलिलं कुण्डम्
१५८ अथ मथुरातीर्थप्रादुर्भावः, दिक्पालादिभिर्मथुरारक्षणम्, मुचुकुन्दक्षेत्रम.
१५९ अथ मथुराप्रदक्षिणा, विध्यादिकम्, मथुराप्रदक्षिणाफलम्, तद्विधानम्.
१६० अथ मथुरापरिक्रमः । मथुरास्थतीर्थप्रदेशेषूत्तरोत्तरंगमनक्रमः प्रदक्षिणा फलम्
१६१ द्वादशवनयात्राप्रभावः, तन्माहात्म्यञ्च..
१६२ अथ चक्रतीर्थप्रभावः मथुराया उत्तरे चक्रतीर्थवृत्तं ब्राह्मणवृत्तांतम्. ...
१६३ अथ कपिलवराहमाहात्म्यम्. मथुरास्थकुण्ठतीर्थेस्नानेन कस्यचिद्ब्राह्म णस्य ब्रह्महत्या निवारणम्, रावणेन वराहरूपिणो देवस्यानयनम्, रावणवधानन्तरं रामेणायोध्यायामानयनम्, ततः लवणासुरवधानन्तरं शत्रुघ्नेन मथुरायाः स्थापनम्, तत्र स्नानादिफलम,
१६४ अथान्नकूटपरिक्रमप्रभावः, मथुरापश्चिमे भागे गोवर्द्धन क्षेत्रम्। पूर्वेणेन्द्रम् दक्षिणे यमतीर्थम्, पश्चिमे वारुणम्, उत्तरेण कौबेरम्, अन्नकूटप्रदक्षिणम्, प्रदक्षिणाविधानम्, पुण्डरीकतीर्थमहिमा, आप्सरसं कुण्डम्, सङ्कर्षणं तीर्थम्, कदम्बखण्डकुण्डम्,

अरिष्टतीर्थम्, राधाकुण्डम्, मोक्षराजाख्यं तीर्थम्, इन्द्रध्वजतीर्थम्, अन्नकूटपरिक्रमफलम्.
१६५ ब्राह्मणमाहात्म्यम्, कूपप्रभावः, मथुरायां प्रेतमुक्तिः.....
१६६ असिकुण्डप्रभावः, असिकुण्डोत्पत्तिः. ...
१६७ विश्रान्तिमाहात्म्यम्, राक्षसमुक्तिः
१६८ मथुरायां महादेवस्यक्षेत्रपालत्वनिरूपणम्, महादेवदर्शनेन मथुरायां प्रवेशात्फलप्राप्तिः.
१६९ गरुडवृत्तान्तम् ...
१७० वसुकर्णवैश्यस्यापुत्रस्य कस्यचिन्मुनेरुपदेशतः सस्त्रीकस्यव्रतं गोकर्ण- नाममहादेवस्य चरतः गोकर्णनामपुत्रप्राप्तिः पुत्राकांक्षया मथुरायां निवसन्धनसंक्षये सति वाणिज्येनोपार्जितं द्रव्यं गृहीत्वा प्रतिनिवृत्तस्य मार्गे कंचिच्छैलं दृष्टा त रिष्टाद्गतस्य तस्य कन्दरे कस्यचिच्छुकस्य समागमे तेनोक्तंस्वस्यप्राक्तनवृत्तम्, गोकर्णशबरसंवादः.
१७१ शुकपञ्जरं गृहीत्वा गोकर्णस्य मथुरागमनम्, धनसंक्षये शुकेन सह धनसञ्चयाय नावि समारुह्यगच्छतो महावातविह्वलस्य सतो गोकर्णस्य शुकेन कुतोपि द्वीपांतरात्संप्रार्थनयाऽऽनीतेन जटायुषः पीठोपरिसमा- रुह्य द्वीपान्तरगमनम्, ततः स्वदेशं गन्तुमशक्तेन गोकर्णेन स्वपित्रोरग्रे शुकप्रेषणम्, मथुरामागत्य गोकर्णवृत्तनिवेदनं तत्पितृभ्याम्. ...
१७२ तद्द्वीपस्थदेवीनां प्रसादतो गोकर्णस्य मथुरागमनम्. ..
१७३तत्र महान्ति कार्याणि कृत्वा गोकर्णस्य मोक्षः
१७४ महानामब्राह्मणाख्यानम्, नानातीर्थेषु पर्यटतो ब्राह्मणस्य प्रेतसंवादः, प्रेतानामाहारः, प्रेतयोन्यामागमनकारणम्, प्रेतत्वप्राप्तिहेतुः, धर्म- विरुद्धकारिणां सद्गतिप्राप्तिकरणम्, मथुरायां सङ्गमे वामनदेवपूजाप्रकारः, प्रेतानां मुक्तिः, एतत्पठनफलम्.
१७५ कृष्णगंगाकालञ्जरमाहात्म्यम्, वसुब्राह्मणाख्यानम्
१७६ वसुब्राह्मणाख्यानम्, कृष्णगंगोद्भवमाहात्म्यम् ...

१७७ द्वारिकायामागतनारदवचनेन सदःसमाहूतानां स्त्रीणां सांबरूपदर्श- नेन कामोद्दीपनम्, सांबाय कृष्णदत्तःशापः, आदित्याराधनं प्रति साम्बाय नारदेनोपदिष्टो धर्मः, तपश्चरतः साम्बस्य सूर्याद्वरप्राप्तिः सूर्यप्रतिष्ठापनञ्च, ततः परं सांबपुरप्राकट्यम्. ..
१७८ मार्गशीर्षद्वादश्यामुपोष्यशत्रुघ्नचरितश्रवणफलम्.
१७९ द्वात्रिंशदपराधेषु प्रायश्चित्तानि मथुरास्थतीर्थानि.
१८० चन्द्रसेननृपाख्यानम्, ध्रुवतीर्थमाहात्म्यम् एतच्छ्रवणफलम् श्राद्धकरणमावश्यकम्, सत्पात्रेषुदानम्, पठनफलम्, ...
१८१ अथ मपुकाष्ठाप्रतिमायामर्चास्थापनम्, प्रतष्ठितार्चायामर्चनविधानम् १८२ शैलार्चास्थापनम्, पूजनप्रकारः, अस्य फलम् ...
१८३ मृन्मयार्चास्थापनम्, अर्चनप्रकारस्तत्फलञ्च. -
१८४ ताम्रार्चास्थापनम्, तद्विधानम्, पूजनप्रकारस्तत्फलम्,
१८५ कांस्यार्चास्थापनम्, तद्विधानम्, पूजनप्रकारस्तत्फलञ्च
१८६ रौप्यप्रतिमास्थापनम्, तदभिषेकः, सुवर्णार्चास्थापनम्, गृहे नार्च्यानि लिंगानि, क्रयविक्रयनिषेधः,
१८७ अथ सृष्टिपितृयज्ञौ, स्वर्गोत्पत्तिः, देवादीनामुत्पत्तिः,
पुत्रशोकसन्तप्तस्यनिमेर्नारदेनज्ञानोपदेशतः समाश्वासनम्, तच्चिन्तनेनागतेन स्ववंश- कर्त्राऽऽत्रेयेणोपदिष्टः पितृयज्ञः, मृतस्योत्तरक्रिया.
१८८ अथ पिण्डकल्पश्राद्धोत्पत्तिप्रकरणम्, मृतस्य त्रयोदशाहपर्यंतं करणीयं कार्यम्, श्राद्धे वर्जनीयाः, आगतानां द्विजानां पूजनादिकम्, छत्रादिदानम्, प्रेतनिमित्तं भक्ष्यभोज्यादिदानम्. प्रेतविसर्जनम्
१८९ अथ पिण्डकल्पोत्पत्तिप्रकरणम्. प्रेतभोजनविशोधनार्थमुपवासादिकम्, उदरस्थे प्रेतान्ने नरकादिप्राप्तिः, पात्रे दानादिकम्, मेधातिथिवृत्तान्तम्,
१९० अथ श्राद्धपितृयज्ञनिश्चयप्रकरणम्, श्राद्धेऽभोज्याः, अदर्शनीयदर्शनेन श्राद्धस्य राक्षसत्वम्, गृहस्थानां श्राद्धादिप्रकारः, श्राद्धादिकरणफ- लम्, पितॄनुद्दिश्य प्रथमं श्राद्धमग्नये दातव्यम्, तत्कारणम्, तत्पश्चात् पितृभ्यः पिण्डदानादिकम्, अपांक्तेया

विप्राः अपांक्तेयानां भोजनेन पितॄणां दुःखम्, मृताऽन्नाभोक्तृणां दानप्रकारः । प्रेतान्नं भुज्यमानानां प्रायश्चित्तम्, तत्र भोजने संकल्पाकरणम्
१९१ अथ मधुपर्कोत्पत्तिदानसंकरणप्रकरणम्.
१९२ अथ सर्वशान्तिवर्णनम्, शान्तिः, मधुपर्कः
१९३ नाचिकेतप्रयाणवर्णनम्, जनमेजयस्यवैशंपायनसमागमः, उद्दालके- नशप्तस्य नचिकेतोनामपुत्रस्य यमसदनगमनम्...
१९४ नचिकेतसः पुनः पितुरन्तिकमागमनम्, संयमिनीस्थानां वृत्तान्तश्रव- णोत्सुकानां प्रश्नाः,
१९५ यमलोकस्थपापिवर्णनम्, अन्ये च तापसैः पृष्टाः प्रश्नाः, ...
१९६. धर्मराजपुरवर्णनम्, यमपुरप्रमाणम्, .पुष्पोदकसरिद्वर्णनम्, पुरस्य नानाविधसमृद्धिवर्णनम् ...
१९७ धर्मिष्ठपापिष्ठानां प्रवेशस्थानानि, धर्मयुक्तानां पापकारिणाञ्च सभा, कूष्माण्डयातुधानाद्यन्यशुभाशुकर्मकारिणां वर्णनम्
१९८ अथ संसारचक्रयातनास्वरूपवर्णनम्, नाचिकेतस्य यमकृतमातिथ्यम्, नाचिकेतकृतं यमस्तोत्रम्, तुष्टेन यमेन ऋषिपुत्राय जीवानां नानविधयातनाप्रदर्शनम्
१९९ विविधपापकारिणां विविधयातनादर्शनम्
२०० नरकयातनास्वरूपवर्णनम्, वैतरणीनदीवर्णनम्, सहकारवनम्, यमचुल्लीवर्णनम्, शूलग्रहः पर्वतः, शृङ्गारकवनम्, नानाविधस्तैन्यकर्तॄणां दशा
२०१ अथ राक्षसकिंकरयुद्धम्
२०२ अथनारकीयदण्डनकर्मविपाकवर्णनम्. नानाविधदुष्कृतकारिणां चित्रगुप्तादिष्टनानाविधदुःखप्रदयातनादानम्
२०३ अथ पापसमूहानुक्रमवर्णनम्, चित्रगुप्तादिष्टपापफलानि
२०४ अथ दूतप्रेषणम्, चित्रगुप्तेन नानाप्रकाररूपधारिणां दूतानां प्रेषणम्
२०५ अथ शुभफलानुकीर्तनवर्णनं सुकृतकारिणां सत्स्थानप्रेषणम्
२०६ अथ शुभकर्मफलोदयप्रकरणम् ...

२०७ संसारचक्रपुरुषविलोभनप्रकरणम्, यमसदसि नारदागमनम्, यमनारदसंवादः,
नरकप्राप्तिनिवारणकृत्यानि, तपआदिनियमकारिणां सत्फलावाप्तिः,
नानाप्रकारव्रतदानादिजन्य- फलवर्णनम्, .. ...
२०८ अथ पतिव्रतोपाख्यानम्, तपसा सिद्धानां द्विजानां माहात्म्यम्, निमि पुत्रस्य
मिथे रूपवतीनामपत्न्याः पतिव्रताप्रभावः, अरण्ये वसतो
मिथिरूपवत्योर्ग्रीष्मतापतप्तायारूपवत्या महीं पतमानायाः
क्रूरकटाक्षप्रक्षेपाद्गगनतलान्मरीचिमालिनः पतनम्.
२०९ पतिव्रतामाहात्म्यवणर्नम्, पतिव्रताभिराचरणीयानि भर्तृनिमित्तकार्याणि --
२१० अथ पापनाशोपायनिरूपणम्, पापनाशनोपायाः, प्रजापतिप्रोक्तपापनाशनोपायाः,
२११ चतुर्वर्णानां पापनाशनोपायवर्णनम्, महापातकिनां पापनिराकरणोपायः,
एकादशीमाहात्म्यम्, एकादश्यां भोजननिषेधः, दशावतारपूजनादिकम, तत्फलं च.
२१२ अथ संसारचक्रोपाख्यानप्रबोधनीयवर्णनम्, संयमिनीवृत्तान्तं श्रुत्वा
तापसानामाश्चर्यम्
२१३ गोकर्णेश्वरमाहात्म्यम्, मुञ्जवन्नामनगे स्थाणुतुष्टये तपस्तप्यतो
नन्दिनामद्विजस्य तपस्तुष्टेनागतेन शंभुना तस्मै स्वसाम्यरूपवरप्रदानम्,
२१४ पुनः गोकर्णमाहात्म्यम्, नन्दिकेश्वरवरप्रदानवर्णनम्, नन्दीश्वरवरप्राप्त्या त्रस्तनां
मौञ्जवति पर्वते ब्रह्मादिदेवानामागमनम्, तत्र
समग्रदेवगन्धर्वतीर्थविद्याधरोरगादीनामागमनम्. इन्द्रस्यार्थनयो
महेश्वरात्स्ववरप्राप्तिकथनम्
२१५ अथ गोकर्णेश्वरजलेश्वरमाहात्म्यवर्णनम्, शिवं विचिन्वतो देवान् प्रत्यन्तरिक्षस्थेन
शंभुनोक्तं शैलेश्वरमाहात्म्यम्, तत्र मृगशृंगोदकं नामतीर्थम्, पञ्चनदं तीर्थम्,
वाग्मतीमाहात्म्यम्, वासुकिदर्शनफलम्, क्रोशोदकं तीर्थम्, ब्रह्मोद्भेदं तीर्थम्, गोरक्षकं
तीर्थम्, गौरीशिखरः उमास्तनकुण्डम्, प्रान्तकपानीयं तीर्थम्, ब्रह्मोदयं तीर्थम्,
सुन्दरिकातीर्थम्, वाग्मती वणिवती- संगमः, क्षेत्रस्यास्य गोकर्णेश्वर इति ख्यातिः
२१६ अथ गोकर्णशृंगेश्वरादिमाहात्म्यम्,  , तत्रैव दशग्रीवस्य तपःकरणम्,
दक्षिणगोकर्णोत्पत्तिः.
२१७ अथ धरणीवराहसंवादफलश्रुतिवर्णनम्.

२१८ पुराणपठनादिविषयानुक्रमणिका.

इति श्रीगोंडलनिवासिकालिदासतनूजनुषाजीवनरामशर्मणाविनिर्मिता श्रीवराहपुराणस्थविषयानुक्रमणिका संपूर्णा ।।